# THE SANSKRIT JOURNAL

OR

# ॥ सहृदया ॥






VOL. XIV. NO. 2

EDITOR R. KRISHNAMACHARIAR, M. A.

CONTENTS.



PRINTED AT THE
SRI VANI VILAS PRESS,
SRIRANGAM.

PUBLISHED AT
MADRAS.

Registered No. M. 103.

# विषयाः ।



# Sahṛidaya.

1. Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.

2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.

3. The last forme of every issue is devoted to publishing rare and useful works.

4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.

5. Literary contributions may be addressed to the Editor and all business communications to the Manager Sahṛidaya office, Puraswaukum, Madras (N. C.).

6. Annual subscription is Rs. 3 only, including postage

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. २.] सौम्यवर्षे वैशाखमासः । [संचि. २.

## सुभाषितानि ।

वरमश्रीकता लोके नासमानसमानता ।
इतीव कुमुदोद्भेदे कमलैर्मुकुलायितम् ॥ १ ॥

अर्था न सन्ति न च मुञ्चति मां दुराशा
त्यागान्न संकुचति दुर्ललितं मनो मे ।
याच्ञा च लाघवकरी स्ववधे च पापं
प्राणाः स्वयं व्रजत किं प्रविलम्बितेन ॥ २ ॥

नभसि निरवलम्बे सीदता दीर्घकालं
त्वदभिमुखनिषण्णोत्तानचञ्चूपुटेन ।
जलधर जलधारा दूरतस्तावदास्तां
ध्वनिरपि मधुरस्ते न श्रुतश्चातकेन ॥ ३ ॥

॥ श्री ॥

# ॥ चन्द्रगुप्तः ॥

---

आचार्यश्चाणक्यः माणवकौ पर्वतकश्चन्द्रगुप्तश्च क्वचित्प्रच्छायशीतले तरुमूले सुखं अशेरत इति सहृदयायां पूर्वमेव प्रास्ताविकिल। तेषु प्रथमं प्रबुद्धश्चाणक्यः शिष्ययोः शेमुषीं परीक्षितुकामः पर्वतकं प्रबोध्य तस्मै कृपाणमेकं दत्वा 'भद्र, चन्द्रगुप्तस्य कण्ठे निक्षिप्तं अन्तर्हितलोमतन्तुकं ग्रैवेयकं अच्छेदयन्नविस्रंसयंश्चोपायेनानय' इत्याज्ञामदात्। सोऽपि चन्द्रगुप्तनिकटं गत्वा ग्रीवायाः प्रमाणादिव निर्मितं ग्रैवेयकमपनेतुमुपायमपश्यन् 'आचार्य, न मया शक्यते' इति व्यजिज्ञपत्।

अन्येद्युरुपाध्यायः चन्द्रगुप्तं प्रबोध्य तादृशीमेवाज्ञामदात्। सोऽपि सुप्तं पर्वतकमेत्य ग्रैवेयकमनुपश्यन्, 'इदं न छेद्यं नापि विस्रंसनीयम्' इति खल्वाचार्यस्याज्ञा। निपुणं निरूप्यमाणे कण्ठच्छेदेनैव गुरोराज्ञा निर्वोढव्या। अपर उपायो न दृश्यते। 'न शक्यते' इति निवेदनादपि सख्युः पर्वतकस्य मम वा मरणमेव श्लाध्यम्' इति निश्चित्य, कृपाणेन पर्वतकस्य शिरोधरां निकृत्य, आभरणमाचार्यस्य पादमूले न्यदधात्। सोऽपि तूष्णीमधोमुखस्तस्मै भृशं तुतोष। 'सर्वथा नमो भगवत्यै भवितव्यतायै' इत्थममन्त्रयत च हृदयेन।

पञ्चषसंवत्सराभ्यन्तर एवाचार्यः चन्द्रगुप्तं कृत्येष्वनलसं

मातङ्गतुरङ्गादिवाहनारोहणे, धनुर्वेदे, कौटिल्यकामन्दकीयादिनीतिशास्त्रेषु, चतुःषष्टिकलासु, शब्दहेतुसमयवार्तासु, मणिमन्त्रौषधादिप्रभावपरिज्ञाने, आध्यात्मिकवादेषु च परिनिष्ठितमकार्षीत् ।

यावच्चन्द्रगुप्तोऽष्टादशे वयसि पदं न्यदधात् तावदेवास्य संनाहयोग्यतामवगच्छन्नाचार्यः, पूर्वं पर्वतकमुखादुपलब्धेन भूमौ सुरक्षितेन प्रभूतेन द्रविणेन रथगजतुरगपदातिरूपं महान्तं सेनानिवेशमुपपाद्य, कुमारं सेनाधिपपदे निवेश्य, स्वयं च साचिव्यधुरां वहन् जनपदान्नगरीश्चैकपद एवाचक्राम । यदा हि केवलं बाहुबलमाश्रित्य राष्ट्राणि दृढमूलानि स्ववशीकर्तुमारभेतामिमावाचार्यमाणवकौ, तावत्सर्वेऽपि नागरिका जानपदाश्च तमतर्कितोपनतमुपप्लवमसहमानाः एकीभूय तयोः सैनिकान्पराजित्य दूरतो विद्रावयामासुः ।

भग्नोद्यमश्चाणक्यः यथापूर्वमटवीमध्यमशिश्रियत् । आसीच्चास्य मनसि—— ‘अहो! अविमृश्यकारिता । अविज्ञाय प्रजानामाशयम् , अविचार्य विजेतव्यानां बलाबले, अविगणय्योत्कर्षमरिसैन्यस्य, अनालोच्यानुसरणीयां सरणिम्, अनधिगत्य शत्रुमित्रोदासीनानां स्थितिम्, अनवाप्य सामन्तानां साहाय्यम्, केवलं बाहुबलेन कथं शक्यते राष्ट्राणि विजेतुम् । तत्कंचन कालं प्रच्छन्नस्वरूपो धृतमहापान्थवेषः सह कुमारेण नगरेषु जनपदेषु च भ्रममाणः प्रथमं प्रजानामाशयमवगत्य मनीषितं संपादयेयम्’ इति ।

तथैव तावविज्ञातस्वरूपौ पान्थौ नाम भूत्वा, रथ्यासु नागरिकसमवायेषु संगीतगोष्ठीषु आपानशालासु विद्वत्समाजेषु यात्रोत्सवेषु

तत्तद्गृहदेहलीषु प्रवर्तमानं प्रजानां विस्रम्भालापादिकं शृण्वन्तौ सर्वतो विचेरतुः । एकदा कस्मिंश्चिद्ग्रामे यदृच्छया चरन्तौ, आत्मनो बालकस्यापूपं ददतीं कांचिन्महिलामपश्यताम् । बालकस्त्वपूपस्याग्रं विहाय मध्यादेवावदाय भक्षयन्, अन्यमन्यं देहीति जननीं मुहुर्मुहुः निरबध्नात् । सापि क्रुद्धा 'मूर्ख, राष्ट्रविजयाय यतमानं चन्द्रगुप्तमनुकरोषि । न कदाप्याशा ते सेत्स्यति' इत्यवदत् । 'अम्ब, किं तेन चन्द्रगुप्तेनानुष्ठितम्? कीदृशं वा मदीयमनुकरणम्? इत्यनुयुक्ता दारकेण 'आयुष्मन्, विहाय बहिर्भागम्, मध्यमेवापूपस्य भक्षयसि । चन्द्रगुप्तोऽपि सम्राड्भवितुमिच्छन्, पार्श्वतः परितो विद्यमानान् सामन्तान् जनपदांश्च प्रथममविगणय्य, अनेकसहस्रसुभटैरभिराक्षितानि राष्ट्राणां हृदयभूतानि महानगराण्येव विजेतुमुपचक्रमे । सर्वैश्च तदतिक्रममसहमानैर्मिलित्वा पराजित अभिद्रावितश्च भग्नोद्यम आसीत्किल' इति स्मेरानना व्याहार्षीत् ।

अनन्तरमेव चाणक्यः महतीं सेनां रचयित्वा प्रथमं जनपदान्वशीकृत्य, अवाप्य च सामन्तानां साहाय्यम्, क्रमेण नगराण्यप्याक्रमीत् । एवमेव मगधान्विजित्य, पाटलीपुत्रं प्रविश्य, नागरिकाणामन्तःकलहं जनयित्वा, तेषामनभिमतं क्रूरप्रकृतिकं धननन्दं हत्वा, धीवरान्प्रलोभ्य, भागीरथीमध्ये सुरक्षितं द्रविणसञ्चयं लब्ध्वा प्रजानां पौरमुख्यानां चानुमत्या चन्द्रगुप्तं सिंहासनमध्यारोपयत् ।

अत एव मोरियराजवंशोत्पन्नस्य चाणक्यसाहाय्येन सम्राट्पदलाभो महावंशग्रन्थे उपवर्ण्यते इति टीकाकारः ।

एवं हि चन्द्रगुप्तस्योत्तमक्षत्रवंशसंभूतिमुपपादयत्सु बौद्धग्र-

न्थेषु 'मौर्याभिधानं मोरियनगरनिर्माणमूलकमिति, ('मयूरीशब्दः प्राकृते 'मोरी' इति विपरिणामं लभते) चन्द्रगुप्तस्य पौत्रो बौद्धसम्प्रदायस्थापक अशोकचक्रवर्ती परम्परया स्वयं शाक्यराजवंशीय इति जोघुष्यते ।

योगनन्दावस्थायाः पूर्वमेव नन्दस्यौरसः पुत्रः नाम्ना चन्द्रगुप्तः कश्चिदासीदिति कथयन् बृहत्कथाकारोऽपि चन्द्रगुप्तस्योत्तमक्षत्रवंशसंभूतिमूरीकरोतीव ।

कथं तर्हि रूपकप्रणेता विशाखदत्तः चन्द्रगुप्तं वृषलत्वेनासकृन्निर्दिशति ? अत्र केचित् नन्देन परिगृहीतायां अवरजातिसंभूतायां मुरानाम्न्यामुत्पन्नोयं मौर्यश्चन्द्रगुप्तो वृषल एवेति वदन्ति । बृहत्कथायामपि नन्दशरीरं प्रविष्टः इन्द्रदत्तः उपह्वरे व्याडिमाहूय 'सखे, पङ्क्तिपावनानां वंशे जातोऽहमस्मिन्नेव जन्मनि शूद्रीभूतोऽस्मि' इत्यात्मानमन्वशोचदिति पठ्यते । तथा च विष्णुपुराणे -- चतुर्थांशे मागधानां राज्ञां वंशानुकथनप्रकरणे इत्थमनुश्रूयते—

'योऽयं रिपुञ्जयो नाम बार्हद्रथोन्त्यः तस्य शुनको नामामात्यो भविष्यति ॥ १ ॥ सचैनं स्वामिनं हत्वा स्वपुत्रं प्रद्योतनामानमभिषेक्ष्यति । तस्यापि पालकनामा पुत्रो भविता ततश्च विशाखयूपः तत्पुत्रो जनकः तस्य च नन्दिवर्धन इत्येते अष्टत्रिंशदुत्तरमब्दशतं पंच प्रद्योता पृथिवीं भोक्ष्यन्ति ॥ २ ॥

"ततश्च शिशुनागस्तत्पुत्रश्च काकवर्णो भविता तत्पुत्रः क्षेमधन्वा तस्यापि क्षत्रौजाः बिन्दुसारः ततश्चाजातशत्रुः तस्माच्च दर्भको दर्भकाच्चोदयनः तस्मादपि नन्दिवर्धनस्ततो महानन्द इत्येते

शैशुनागा दश भूमिपालाः त्रीणि वर्षशतानि द्विषष्ट्यधिकानि भविष्यन्ति ॥ ३ ॥

महानन्दिसुतः शूद्रागर्भोद्भवोऽतिलुब्धो महापद्मो नन्दः परशुराम इवापरोऽखिलक्षत्रान्तकारी भविता ॥ ४ ॥

ततः प्रभृति शूद्रा भूमिपाला भविष्यन्ति । स चैकच्छत्रामनुल्लङ्घितशासनो महापद्मः पृथिवीं भोक्ष्यति ॥ ५ ॥

तस्याष्टौ सुताः सुमाल्याद्या भवितारः तस्य च महापद्मस्यानु पृथिवीं भोक्ष्यन्ति । महापद्मस्तत्पुत्राश्च एकं वर्षशतमवनीपतयो भविष्यन्ति । नवैतान्नन्दान् कौटिल्यो ब्राह्मणः समुद्धरिष्यति ॥ ६ ॥

"तेषामभावे मौर्याश्च पृथिवीं भोक्ष्यन्ति । कौटिल्य एव चन्द्रगुप्तं राज्येऽभिषेक्ष्यति ॥ ७ ॥

'तस्यापि पुत्रो बिन्दुसारो भविष्यति । तस्याप्यशोकवर्धनः, ततः सुयशाः, ततो दाशरथः, ततः संगतः, तत शालिशूकः, तस्मात्सोमशर्मा, तस्माच्छतधन्वा, तस्याप्यनु बृहद्रथनामा भविता । एवं मौर्या दश भूपतयो भविष्यन्ति अब्दशतं सप्तत्रिंशदुत्तरं ते पृथिवीं शुंगा भोक्ष्यन्ति ॥ ८ ॥' इति

एवं च निखिलक्षत्रान्तकारिणो महापद्मस्यानन्तरं भूमिपालाः शूद्रा एवेतीह निर्दिष्टं वाक्यं प्रमाणीकृत्यैव ब्राह्मणाः 'नन्दान्तं क्षत्रियकुलम्' इति विश्वसन्ति । बृहत्कथाप्रोक्तं योगनन्दस्य शूद्रत्वमपि सङ्गच्छते । आतश्च विशाखदत्तः चन्द्रगुप्तं वृषलत्वेन निर्दिशति ।

महावंशनामके सौगतग्रन्थे 'कालाशोकस्य तनूजेषु दशस्वेकः

अवरजातिवनितायामुत्पन्नः सिंहासनमारोढुमनर्हः जनपद एवावात्सी-त् इतरे नव नन्दाः क्रमेण राष्ट्रेऽभिषिक्ता बभूवुः' इति पठ्यते ।

विष्णुपुराणे तु कालाशोकस्य नाम नोपात्तम् । परं तत्स्थाने महापद्मनन्दः शूद्रागर्भसमुत्पन्नः निखिलक्षत्रान्तकारी कश्चिदुपवर्णितः । अत्र बौद्धमतावलंबिषु भिक्षुषु नितरामादरातिशयमाबध्नन्कालाशोकः (महापद्मनन्दः ?) ब्राह्मणानामनभिमतः शूद्रत्वेन निर्दिष्टः स्यात् इत्यपि संभाव्यते । यथा तथा वा भवतु । ग्रन्थद्वयेऽपि मगधराजस्य कस्यचिच्छूद्रागर्भसंभवः पुत्र एक आसीदिति स्पष्टमभिहितम् । अस्तु नामायं ब्राह्मणसौगतग्रन्थकाराणां विसंवादः । नवनन्दानां राष्ट्रभरण-काले यवनचक्रवर्ती अलक्सान्द्रनामक भारतवर्षमिमं विजेतुं महता सैन्येन आगमदिति श्रूयते । तेन सहागताः अपूर्वदेशदर्शनकुतूह-लिनः केचन पुरावृत्तलेखकाः तदानीन्तनानां भारतवर्षीयाणां प्रवृत्तिं स्वीयभाषया व्यलिखन् इति चावगम्यते । तैश्च किमुक्तं मागधचक्र-वर्तिनः नव नन्दान् चन्द्रगुप्तं चाधिकृत्य, इति विचारणीयं किल पुरावृत्तविमर्शकैः । (क्रमशः)



॥ श्रीः ॥

## ॥ नारदमहिमानुवर्णनम् ॥

---

लक्ष्मीवल्लभपादपल्लवयुगाविश्रान्तसञ्चिन्तन- र ॥
प्रादुर्भूतनिरन्तरालपुलकानुस्राविबाष्पावृतः ।
यो गायन्निह चञ्चुरीति भगवन्नामावलीर्वीणया ु-
देवर्षिप्रवराय दिव्यमहिमावासाय तस्मै नमः ! ं मे । त्व-

शापः कोऽपि सुतप्रवासकुपितप्राचेतसायोजितः
श्वश्वद्विश्वजनीनचेष्टितशते सौकर्यमाकल्पयन् ।
येनामानितरामनुग्रह इति स्वच्छन्दसञ्चारिणा
देवर्षिप्रवराय दिव्यमहिमावासाय तस्मै नमः ॥ २ ॥

प्राग्जन्मार्जितपुण्यवैभवभवब्रह्मावबोधस्फुर-
त्सान्द्रानन्दमरन्दसिन्धुलहरीगाढावगाढाशयः ।
यो जागर्ति जगत्त्रयीजनहिताधानैकतानः सदा
देवर्षिप्रवराय दिव्यमहिमावासाय तस्मै नमः ॥ ३ ॥

नानाम्नायविभागतः स्मृतिपुराणाख्यायिकाख्यानतः
श्रुत्यन्तोपरिबन्धतोऽप्यसुहितं यो वासवीनन्दनम् ।
तत्त्वं भागवतं रहस्यमुपदिश्यापास्तमोहं व्यधा-
द्देवर्षिप्रवराय दिव्यमहिमावासाय तस्मै नमः ॥ ४ ॥

दारस्नेहवशंवदस्वजनकावज्ञाकदर्थीभव-
न्मानाध्मातमतिं पितुर्निलयनान्निर्जग्मिवांसं ध्रुवम् ।
आलक्ष्याध्वनि पञ्चहायनमनुक्रोशेन योऽन्वग्रही-
द्देवर्षिप्रवराय दिव्यमहिमावासाय तस्मै नमः ॥ ५ ॥

यस्माद्विश्वहितैकतानमनसः कारुण्यवारान्निधे-
र्ज्ञात्वा सात्वततन्त्रसारमखिलं जात्या स दैत्योऽपि सन् ।
प्रह्लादो भगवत्पदैकनिरतो भक्तावतंसोऽभव-
द्देवर्षिप्रवराय दिव्यमहिमावासाय तस्मै नमः ॥ ६ ॥

त्रिभुव... पि सङ्क...
...ल्यैकनिकेतनैकतनयापायोदयद्दुस्सह-
मह... द्दामतमाशुशुक्षणिशिखादन्दह्यमानाशयः ।

येनाश्वास्यत चित्रकेतुनृपतिर्वाक्यामृतासेचनै-
र्देवर्षिप्रवराय दिव्यमहिमावासाय तस्मै नमः ॥ ७ ॥

यत्पादाम्बुरुहावनेजनजलस्येन्द्रादिबृन्दारक-
स्तोमः स्तोककति प्रतिक्षणमघव्रातच्छिदाचुञ्चुनः ।
यद्वक्त्रेन्दुगलद्वचोऽमृतझरस्याद्धा चकोरत्यजो
देवर्षिप्रवराय दिव्यमहिमावासाय तस्मै नमः ॥ ८ ॥

---

कल्याणं मे विधत्तां कलशजलनिधिक्रोडकल्लोलमाला-
निष्ठ्यूतस्फीतफेनप्रकरधवलिमाडम्बरच्छेदचुञ्चुः ।
नेदीयो नारदीयो दुरितभरतमःस्तोमदूरीक्रियायां
निस्तन्द्रं चन्द्रिकाया विभवमभिवहन् देहकान्तिप्रवाहः ॥१॥

श्रेयः श्रीनारदीयो झटिति घटयतादुत्कटानां जटानां
जूटो मे पुष्कलं यः कलयति विकसत्कञ्जकिञ्जल्कमञ्जुः ।
प्रत्यूषोदित्वराहस्करकिरणझरीपिञ्जराधित्यकाग्र-
श्रीकण्ठागारशैलेश्वरशिखरपरिष्कारकुञ्जप्रकारम् ॥ २ ॥

शीतज्योतिःकलाकोमलमलिकतटं भासमानोर्ध्वपुण्ड्रं
भूयान्मे पुण्डरीकासनतनुजनुषो निर्जरर्षीश्वरस्य ।
चिल्लीवल्लीविलासाञ्चितमुरुकरुणापूरितापाङ्गपात-
व्याधूतस्वीयसेवारतजनदुरितं नेत्रमप्यार्तिशान्त्यै ॥ ३ ॥

नासाभासां विलासैर्हसिततिलसुमं पूर्णकारुण्यधारा- ु-
तिम्यन्मन्दस्मितार्द्रं वदनसरसिजं श्रेयसे जायतां मे । त्व-

पुष्यत्सौरभ्यसारस्फुरिततुलसिकागुच्छकर्णावतंस-
च्छायाव्याकीर्णगण्डस्थलविमलमहःपूरितं नारदस्य ॥ ४ ॥

अश्रान्तोद्गीर्णकर्णामृतरसमुरजिन्नामवर्णाभिराम-
भ्राजिष्णुस्वर्णवीणागुणगणनिपुणक्वाणकेलिप्रवीणः ।
पाणिः प्रालेयबिन्दुस्तबकितकमलप्रक्रियामुद्वहन् मे
पापच्छेदं तनोतु स्फटिकवलयभृत् पद्मजन्मात्मजस्य ॥

अंसे संसक्तमम्भोरुहभवतनयस्यारुणच्छायमह्वा-
यांहःसंहारि भूयान्महदिह महतीचुम्बि तुम्बीफलं मे ।
संसारोदग्रहालाहलबहलगदच्छेदविद्याचणोद्य-
न्नादब्रह्मामृतापूरितपुरटघटप्रौढिमाढौकमानम् ॥ ६ ॥

लक्ष्मीं दद्याद्वलक्षच्छवि वनजभवापत्यवक्षः कवाटं
नित्यं मे तप्तजाम्बूनदसुषमसमुद्दीप्रयज्ञोपवीतम् ।
नैपालीधातुरागच्छुरितसुरधुनीनिर्झरभ्राजमान-
स्थाणुप्राणप्रियावत्सलधरणिधरप्रस्थसौन्दर्यधुर्यम् ॥ ७ ॥

ऐणेयस्योपरिष्टात् सुघटितमजिनस्याञ्जनश्यामभासो
मौञ्जीदामेदमीयं नवकनकलतासुन्दरं दन्दहीतु ।
कालुष्यं कालधौतक्षितिधरकटकारूढकालाम्बुवाह-
च्छेदप्रद्योतिविद्युद्वलयसुभगतागर्वसर्वङ्कषं मे ॥ ८ ॥

जम्भद्विट्कुम्भिशुण्डामदहरणचणं नारदस्योरुयुग्मं
कम्रं जानुद्वयं च स्फटिकमणिसमुद्गाभिमानापहारि ।
जङ्घाद्वन्द्वं स्फुरत्कैतकमुकुलगलग्राहिनिर्द्वन्द्वशोभं
बोभूयन्तां भवाम्भोनिधिभयशमनं भूयसे श्रेयसे मे ॥ ९ ॥

वन्दे वन्दारुबृन्दारकमुकुटतटप्रोतहीरालितारा-
दाराश्लेषप्रसादोल्लसितनखरसन्दोहराकेन्दुबृन्दे ।
सन्देहाभावमन्देतरमहिमविमर्शातिनम्रोत्तमाङ्ग-
स्तुङ्गातङ्कच्छिदायै द्रुहिणसुतमुनीन्द्रस्य पादारविन्दे ॥

जयतु भगवानयं जगत्त्रयपवित्रीकरणचणाविचित्रतरचरित्रशाली कालत्रितयसाक्षात्कर्ता दुष्टनिग्रहशिष्टानुग्रहनिरवग्रहधृताग्रहस्तत्तदवसरेषु तत्रतत्र सत्वरमुपागत्य तत्तज्जनांस्तत्तत्कर्मसु प्रवर्तयन् अयत्नमेव निजनयनैपुण्येन हिरण्याक्षपुरःसराणाममर्त्यपरिषदमित्राणामत्यन्तमसौ दैत्यहितकृत्याशंसी नित्यमेवास्मन्मित्रमिति चित्तविश्वस्ततामुत्पाद्य सद्य एव तद्वधस्य निमित्तीभवन्, कदापि निजानुचरतुम्बुरुपर्वतप्रष्टवसिष्ठार्ष्टिषेनारिष्टनेमिभृगुभरद्वाजशरद्वदत्रिमैत्रेयच्यवनकबषौर्वदेवलोतथ्यमेधातिथिगौतमाङ्गिरःपराशरकौशिकपिप्पलादपुलस्त्यागस्त्यप्रभृतिसमस्तमुनिस्तोमपरिवीतपरिसरः बदरिकाश्रममविरलबदरीतरुनिकुरुम्बनिबिरीसमविरतविमुक्तविरोधसहविहरणसञ्जातसौहार्दहरिद्विरदहरिणशार्दूलनकुलकाद्रवेयप्रमुखमृगकुलाकुलं मदतरलकरिकलभकर्णतालमद्दलध्वनिमिलितमदकलकलकण्ठकण्ठनालगलितकलकूजितललितगानानुसारिमदोदग्रमयूरपटुतरनटनाटोपसम्पन्नतौर्यत्रिकविचित्रितमुपेत्य प्राक्तनमुनीश्वरयोर्नरनारायणयोः स्वविरचितसाङ्ख्यसारसर्वस्वभूतविविधस्तवप्रकारकलितप्रसादवदनसुधाकरोदरानिरित्वरपरमोपदेशामृतरसमास्वादयन्, कदाचिदमन्दचिदानन्दाद्वैतसदानुभूतिविदूरितमदादिविकारपरमहंसैकनिकेतं श्वेतद्वीपमासाद्य दुर्लभतरतदीश्वरवरिवस्यामहोत्सवमनुभवन्, कदापि च सत्यलोकमेत्य निजापत्यसल्लापकौतुकतदात्व-

परित्यक्तनित्यवेदपाठकृत्यं पितरमभिवन्द्य भुवनवृत्तान्तानावेदयन् , कदाचिदपि प्रदोषसमयप्रवृत्तनृत्तपुरत्रयविमर्दनसमर्चनससम्भ्रम-समापनीपत्यमानसमस्तामरसमुदयसम्मर्दसमाकुलं कैलासशैलमु-पगम्य निजागमनसमाकुञ्चितविपञ्चिकाप्रपञ्चनविरिञ्चप्रियतमा-विमुक्तमासनमुदञ्चितानन्दपञ्चबाणारिनयनाञ्चलाभिनन्दितः सम-लङ्कुर्वन् , कदाचन च सकलभुवनोपरि परिलसितमफलाभिलाष-बहुलजन्माचरितविपुलधर्मकलितनिर्मलीभावचित्तसमुदित्वरभक्तिभ-रसमाराधितपरमपुरुषप्रसादसमधिगततत्तादृशोन्नतपददिव्यजनाधि-ष्ठितविमानशतपरिवृतं अनिर्वचनीयरूपसर्वातिशायिनिर्वाणफलविश्रा-णननिर्वासितगीर्वाणजनोर्वीरुहगर्वातिरेकविविधविटपिपटलाविलसि-तनिश्रेयसवनराजिविवरविराजदविरलतुलसीदलबहलपरिमलपूरित-गगनान्तरालं मन्दमारुतान्दोलितकनकारविन्दसन्दोहसान्द्रतरनि-ष्यन्दिमकरन्दपानतुन्दिलमत्तमिलिन्दबृन्दझङ्कारमिलितकलहंसका-ह्वपुष्कराह्वचक्राह्वबर्हिणदात्यूहतित्तिरिशरारिपरभृतक्रकरकुररमयूर-करेटुचटकशुकप्रमुखशकुननिनदमुखरितदिगन्तरं अकुण्ठमहिम वि-कुण्ठभुवनमभ्येत्य भक्तिभरतरलदूरापसृतपार्षदपाणिसंपुटपरम्परा-विडम्बितनवाम्बुजकदम्बकग्रथितमालिकामयोभयपार्श्वालङ्करणया सरण्या सप्त कक्ष्यान्तराण्यतीत्य सत्यरूपेण भृत्यानुकम्पिना नित्या-नन्दमयेन ब्रह्मण्यदेवेन सद्यः प्रत्युत्थाय दत्तार्हणो महार्हमणिविष्टर-निविष्टः प्रहृष्टरोमा भगवद्रूपामृतनिमग्नदृष्टिः पुष्टादरमनुपृष्टश्च तत्त-दुदन्तवर्णनैरनन्तशायिनश्चिरन्तनपुरुषस्य हृदन्तरविनोदमुत्पादयन् , कलितकुतूहलमतलवितलसुतलरसातलादिष्वपि सकललोकेषु स्वैर-सञ्चारकारी समस्तजनक्षेमनिर्माणनिर्मायधृतवर्मा दुर्मदान्धीभावा-

दन्धतमसे निपतिष्यतोर्नलकूबरमणिग्रीवयोरर्जुनमित्रेण भगवतानुग्राह्यतां सम्पादयितुमेव दत्तार्जुनीभावः, पुण्यवतामग्रगण्यः, शरण्यः सर्वभूतानां, ज्ञानस्यैकाधिष्ठानं, वसुदेवहृदयमोहनीहारहारिहरिदश्वः, सरिदीश्वर इव सपक्षपर्वतोपसेवितः, पर्वतेन्द्र इव बहुधातुकलितविख्यातिः, पतगपतिरिव विनताभिमतसम्पादनलम्पटः, सज्जनसमाज इव सन्मार्गकृत्यासङ्गी, शरत्काल इव कलहंसकुतुकमुद्भावयन्, कलानिधिरपि दोषासङ्गवर्जितः, सुप्तोऽपि प्रबुद्धः, सद्द्वेषोऽप्यद्वेषः, तामरसभाञ्चितचरणोऽपि नतामरसभाञ्चितचरणः, शरणागतसकलकल्याणवितरणस्वर्लोकशाखी, वल्लकीतल्लजसमुल्लसितपाणिपल्लवः, शारदागमविमलनीरदमदविदूरीकरणविशारदशरीरशोभः, शारदारमणनन्दनः, श्रीनारदमहामुनिः ॥



सल्लोकीडितविश्वविश्रुतभुजस्फीतप्रभावाश्रया
दुर्वारप्रचुरस्मयोद्धतसुपर्वामित्रमर्मच्छिदा ।
कल्लोलद्युतिचिल्लिका वितनुते मोदं सुराणामुमा
माता मे सततं दुरन्तकरुणा या सा मुदा पातु मा ॥

# सुलोचना ।

(पूर्वप्रकाशितात् परम्)

---

निर्गते च तस्मिन्, वल्लभस्य भाविनीममङ्गलसन्ततिमाशङ्कमाना सुलोचना हृदयेन किमप्यालिखन्ती दीर्घमुष्णं च निश्वसन्ती मूर्च्छामवाप । ततः सखीभिः समाश्वासिता कथं कथमपि चेतनामुपलभ्य बाष्पायमाणेक्षणमाननकमलं वामकरतले कुर्वाणा तूष्णीमधोमुखी तस्थौ ॥

इत्थंभूते च व्यतिकरे, कंकपत्रैरलंकृतेन, कनकपुङ्खविराजमानेन, कालायसनिर्मितेन, पवनवेगात् कटु क्वणता, दर्शनेनैव मूर्च्छामुत्पादयता, कृतान्तकोपेनेव मूर्तिमता, कृष्णोरगेणेव कृपाणतामुपगतेन महासिना संयुतः हेमाङ्गदभूषितः रक्तचन्दनालंकृतः कश्चन बाहुदण्डः मरकतमणिस्तंबशङ्कामुपजनयन् चक्राकारेण परिभ्रमन् तस्याः पुरस्तादपप्तत् ॥

'हा! हा! किमेतत्' इत्याकुलहृदयानां सखीनां कलकलरवेण समुन्मीलितलोचना सा रमणीमणिः स्वलोचनयुगलेन पुरः पतितं बाहुदण्डं निर्वर्ण्य, किंचिदिव निध्यायन्ती, स्वर्णरेखाविरचितानि स्वनायकस्य नामाक्षराणि तस्यामेव खड्गलतिकायां यदृच्छयोपलभ्य सद्य एव कीर्णशिखण्डास्तीर्णभूमिः अविच्छिन्नपातं पपात ॥

अचिरादेव धरणीतलादुत्थाय, स्वभुजलताभ्यामालिङ्ग्य

तं बहुदण्डं, क्षरदश्रुबिन्दुतारकितपयोधरा, स्थूलस्थूलं निश्वसन्ती "हा हतास्मि! हा दग्धास्मि! हा मुषितास्मि! हा वंचितास्मि! हा किमेतदापतितम्! आर्तास्मि! अशरणास्मि! दीनास्मि! हा त्रिभुवनैकसुन्दर, केन वा हतोऽसि? हा सुलोचनामयजीवित, कथं मामनाथामेकाकिनीं मुक्त्वा गतोऽसि? हन्त! न पारयामि प्राणान् धारयितुम्, नाथ, त्वया विना अद्य मे जीर्णारण्यं जगत्। निरर्थकं च जन्म। काष्ठप्रायं शरिरम्। भगवन्, कृतान्त, अपहर मे जीवितमद्यैव। हा 'सुलोचनालोचनचकोरचन्द्र', पुलोमजापतिमपि सलीलं पराजित्य 'इन्द्रजित्' इति प्रसिद्धवैभवस्य क्व गतं तद्धैर्यम्? क्व वा गतमन्यादृशं ते सदसद्विवेकविज्ञानम्? उक्तं खलु मया बहुशः 'विरम विरमास्मादनर्थावहादुद्योगात्' इति। दीनामेनामनादृत्य गतः त्वं सर्वधा स्वस्थोऽसि; नय मामपि तं प्रदेशं यत्र त्वं वससि; अहो! वैपरीत्यं कालस्य; अकाण्डोपनतेन संतापेन दह्यत इव मे अन्तरात्मा! पच्यन्त इव अङ्गानि! उत्सार्यन्त इव प्राणाः! हा! किं करोमि? पुनरपि कथं द्रक्ष्यामि जीवितेशम्? इतः परं नास्ति मे जीविते काचिदप्याशा। अद्यैव आश्रयाशमाश्रये, आहोस्वित् क्षिपामि हतशरिरमिदमपारे वरुणालये। अथवा दग्धजीविताया मे शरिरं शरारूणामामिषीकरोमि' इत्येतानि च अन्यानि च सकरुणं विलपन्ती तत्कालसुलभया मूर्च्छया पस्पृशे।

अथ समीपस्थितेषु सखीजनेष्वेका सुलोचनां दधार। अन्या काचन कांचनपात्रे सलिलमानीय तस्या मुखकमलं लोचनयुगलं च ममार्ज। अपरा काचित् ससम्भ्रममार्द्रतालवृन्तेन मन्दं मन्दं

वीजयन्ती मृदुपवनं सञ्चारयामास । चतुराः काश्चन 'सखि सुलोचने, समाश्वसिहि समाश्वसिहि' इत्यसकृदाश्वासयामासुः ।

छिन्नां कल्पवल्लीमिव प्रपतितां भूमौ, वात्यया वलाहकादुद्धात्य निपातितां तटिद्वल्लीमिव महीतलमधिशयानाम्, धूलिधूसरितदिव्यशरीराम्, 'पङ्कदिग्धामिव मृणालीम्, पद्मिनीमिव विध्वस्ताम्' पतिशोकविह्वलाङ्गीं तां तन्वङ्गीमभिवीक्षितुमसहमानाः 'हा किमेतदापतितम्' इत्युत्क्रोशन्त्यो धरण्यामपतन् ॥

एवं प्रतिक्षणं प्रसर्पता शोकानलेन दह्यमानमानसानां सखीनामत्युष्णबाष्पजलपूरप्लाविताङ्गी कोमलाङ्गी कथञ्चित् चेतनामवाप्य, सद्यो मरणमेव शरणं मन्वाना, कामं रुदती कामप्युपनतां कान्तस्य दशां संचिन्त्य 'हा कामसुन्दर, कथमियं पापा त्वया विना जीवितं धारयतु? प्राणेश्वर, उज्झितेषु प्राणेषु त्वया, कथमद्यैव न निर्गच्छति मे प्राणावलिः? आर्य, प्रसीदेदानीम्; नय मामपि त्वदावासम्; हा सख्यः, मरणादप्यधिकं दुःखमिदमनुभवन्ती निर्लज्जाऽहं नष्टेऽपि प्रियतमे किमर्थं जीवामि? केन वा प्रियचाटुशतालंकृतैरालापैः कालं नेष्यामि? कस्मै निवेदयामि मे दुःखम्? ज्योत्स्नेव शशाङ्केन, तटिदिव वलाहकेन, सर्वशोकविनाशाय अनुसरामि मे हृदयदयितम्; काष्ठान्याहृत्य विरचयत चिताम्; ज्वलयत दहनम्, संभावयत मामन्त्येन आलिंगनदानेन' इति प्रलपन्ती, ससखीजना पुनरपि संमुमूर्च्छ ॥

अथ मुहूर्तमात्रेण चेतनामवाप; क्षणं 'हा नाथ' इति वक्षसि ताडयन्ती रुरोद; क्षणमत्युष्णमतिदीर्घं च निशश्वास; क्षणं

'नेयं समीचीना सरणिः, यदिमां त्वदेकशरणामेकपद एवोज्झित्वा गतोऽसि स्मर्तव्यां गतिम्' इति मुक्तकण्ठं विललाप ॥

एतामवस्थामनुभवन्तीं तां वामलोचनां सुलोचनां काचन सखी सविनयं सशोकं सानुतापं च अभिदधे 'अयि सुलोचने, किमत्र क्रियतां विधिविहिते वस्तुनि? न साध्वनुष्ठितमम्लानचंपककुसुमकोमल तनौ अनभ्रमेव अशनिं पातयता, पातकिना, परमनिष्ठुरेण विधिना; को हि नाम निवारयितुमीष्टे जगति जन्तुर्भवितव्यताम्? मन्ये अन्यस्मिन् जन्मनि कृतस्य घोरस्य निष्प्रतिक्रियस्य अवश्यमनुभवितव्यस्य पापस्य फलमेतदिति; विश्रान्तभागधेया न शक्नोषि पुनरपि द्रष्टुं ते हृदयदयितम्; सत्यमसह्यमेव प्रियविरहजं दुःखम्; परन्तु, मुग्धः खलु लोको गते वस्तुनि शोकमनुभवति; विदितवेदितव्यायाः तव पुरतो जिह्रेमि चपलाऽहमेवं जल्पितुम्; तथापि चिरपरिचितमव्याजं प्रेमैव मामेवं वाचालयति; अलमनेन शोकेन, समाश्वसिहि' इति ॥

अथ सुलोचनाप्यनुमरणे कृतनिश्चया सखीजनं पुनः पुनर्निर्बबन्ध चिताविरचनाय। सर्वेषु च शोकप्रतिपन्नमौनेषु सखीजनेषु, काचन सुलोचनायाः समीपं मन्दं मन्दमुपेत्य, सविनयमिदं न्यवेदयत् 'अयि तपस्विनि, अविज्ञाय भूतपूर्वं वृत्तम्, अनालोक्य मृतस्य पत्युर्मुखम्, अनिर्धार्य तत्वतो हृदयदयितस्यापतितां दशाम्, अविचार्य कस्यायं बाहुदण्ड इति, अविगणय्य च केनायमत्र क्षिप्तः किमर्थं वा इति, केवलमनुमरणे कृतनिश्चया अविमृश्यकारिणमात्मानं न रुणत्सि शोकोपहतचेतना त्वम्' इति ॥

श्रुत्वा तु तद्वाक्यं सा रमणी 'साधूपदिश्यते' इति

बहुमन्यमाना "निकुम्भिलायां होमं निर्वर्तयितुं किल इतः प्रास्थित मे नाथः; दीनाऽहं कथं वा ज्ञास्यामि तस्य प्रवृत्तिम्? कं वा पृच्छामि? केन वा विज्ञापयिष्यते मे नायकस्य कथा? कुत्र गच्छामि? केन वा प्रकारेण कया युक्त्या कतमेन वोपायेन ज्ञास्ये मन्दभागधेयाऽहं नाथस्य वृत्तान्तम्?" इति सनिर्वेदं व्याहरन्ती, त्रुटितस्वच्छमुक्ताजालकनिकरान् किरन्ती बाष्पबिन्दून्, शोकातिरेकविलुलितेन्द्रियग्रामा, निर्मोकपरिलघुना स्वच्छवाससा आच्छादितं शरन्मेघावृतमिवेन्दुमण्डलं मुखं दधती, पार्श्वस्थिताभिः सखीभिः 'समाश्वसिहि' इति असकृत् संस्पृश्यमाना पाणिना, प्रतिक्षणं क्षामतां व्रजन्ती, अनालोकिततत्कालकर्तव्यकार्यनिश्चया, शून्यहृदया क्षणमतिष्ठत् ॥

अथ कथंकथञ्चित् संस्तभ्यात्मानं, नायकस्य वृत्तान्तमधिजिगमिषती, 'अहो धिक् दुर्विलसितं दैवहतकस्य! ननु पृच्छामीमं नाथस्य बाहुदण्डमेव तस्य सर्वमभ्युदन्तजातम्' इति निश्चित्य त्रिः प्रदक्षिणीकृत्य निटिलतटस्पृष्टभूतला प्रणम्य च तं सकृपाणं पाणिम्, शिरसि विनिहिताञ्जलिसंपुटा सविनयं व्यजिज्ञपत् 'स्वस्ति सकलरिपुकुलविदलनप्रकटितनिजसामर्थ्याय, कृपाणलतालंकृताय, बन्दीकृतबृन्दारकनायकाय मे नायकस्य बाहुदण्डाय; एषा प्रतिक्षणवर्धमानपतिविरहज्वलनोज्ज्वलज्वालासंततिसंतप्तसर्वावयवा, एकान्तनिष्ठुरेण चिरपरिचितप्रेमरसास्पदहृदयदयितसमागमाद्विघटिता अकाण्ड एव दैवहतकेन, मरणादप्यधिकतरं पतिविरहशोकमसहमाना, अश्रवणीये तदस्तमयवृत्तान्ते श्रुतमात्र एव अनुमरणे कृतनिश्चया, तन्मुखकमलमनालोक्यानुगमनमसमञ्जस-

भिति कलयन्ती, तन्मुखकमलदर्शने कामपि युक्तियुक्तां प्रतिपत्तिमपश्यन्ती, अनन्यशरणा, त्वामेव शरणं प्रपन्ना, साञ्जलिबन्धम् साश्रुपातम् सविनयम् सबहुमानं च याचते; सदयमुच्यताम्; अहो मे नाथस्य दक्षिणहस्त, लोकैकवीरः असकृदारब्धातिभयंकरसमरमुखशिततरशरनिकरजर्जरितनिर्जरः केन हतो मे दयितः! किं वा करणीयं मन्दभाग्यया मया तन्मुखावलोकनाय? कुत्र वा गन्तव्यम्? इति ॥

अनुक्षणं प्रतिपालयन्ती प्रतिवचनमश्रृण्वती कामपि वार्ताम्, द्विगुणीकृतशोकावेगा 'अयि हस्त दक्षिण, सर्वथा निष्ठुरोऽसि। दाक्षिण्यं नावलम्बसे? यदि सत्यमेव मे नाथस्य बाहुरसि, यदि चासीन्मयि मन्दभागधेयायामव्याजं प्रेम मे हृदयदयितस्य, तर्हि देहि मे प्रतिवचनम्' इत्यवादीत् ॥

अमङ्गलां वाचं श्रावयितुमनुत्सुक इव पुनरपि वाचंयमे तस्मिन् बाहुदण्डे, परां कोटिमारूढा शोककोपयोः, ईषत्कषायितलोचना, स्फुरदधरपल्लवा, सर्वाङ्गीणेन संतापेनाकंपितगात्रयष्टिः, पुनरप्युत्थाय पतिमेव मनसा ध्यायन्ती, 'अहो वैपरीत्यं कालस्य! यन्मया बहुशः प्रार्थ्यमानोप्ययं बाहुदण्डः न मां प्रतिवक्ति; भवतु, पुनरपि सशपथं पृच्छामि— 'अयि भुजदण्ड, यद्यहमाविवाहसमयात् सुखे दुःखे च मम प्राणवल्लभमन्तरा नान्यमस्मार्षम्, यदि चाहं न कदापि मम दयितं विना अन्यं पुरुषं मनसाप्यचिन्तयम्, तद्देहि मे प्रतिवचनम्' इत्युक्त्वा विरराम ॥

(क्रमशः)

# स्थावरतत्त्वदर्शनम् ।

## द्वितीयोभागः (उद्यानवाटिका)

---

यज्ञशर्मा— सखे ! पश्य सश्रीकतामस्योद्यानस्य ! एकत्र मन्दमन्दे-नालसगतिना मलयमारुतेनाकम्प्यमाना एषा माधवी लता नितरामेव समुदश्चयति माधवीं विभूतिम् । अपरत्र च एष पुंस्कोकिलः प्रियामुखे सप्रणयं चञ्चूपुटेन अभिनवानि रसाल-पल्लवानि विनिक्षिपति । उक्तं हि कविसार्वभौमेन—

कुसुमजन्म ततो नवपल्लवाः
तदनु षट्पदकोकिलकूजितम् ।
इति यथाक्रममाविरभून्मधुः
द्रुमवतीमवतीर्य वनस्थलीम् ॥ इति

चन्द्रपालः— सत्यम् ऋतूनां कुसुमाकर एव जनानां चित्तं समुल्लासयति । सत्स्वपि रमणीयेषु नैकविधेषु द्रुमेषु रसाल एवास्मिन् समये हृदयमावर्जयति । यतः पश्य—

भूरिशोऽपि च वसन्ति कानने
शाखिनः फलविशेषशालिनः ।
कोकिलस्य तदपीह मानसं
नो रसालमपहाय तुष्यति ॥

यज्ञशर्मा— सखे ! इतः पश्य कमलषण्डानि । अत्र हि मधुपाः स्वैरं निपीय मकरन्दं श्रुतिसुखं विरुवन्ति ।

चन्द्रपालः— अनेन सर्वतः संचरमाणेन मधुकरकुलेनाभियुक्तोक्तिमिमामनुस्मारितोऽस्मि—

वणिज इव भान्ति तरवः
पण्यानीव स्थितानि कुसुमानि ।
शुल्कमिव साधयन्तो
मधुकरपुरुषाः प्रविचरन्ति ॥

यज्ञशर्मा— सखे ! अतिरमणीयं मन्त्रयसे । अनुगृहाणेमां पुन्नागवाटिकामवलोकनदानेन ।

चन्द्रपालः— मित्रमणे, अतिरमणीया खल्वस्य पुन्नागतरोः प्रसूनलक्ष्मीः । पश्य, अधः पतितैः कुसुमैः भूमिरपि सनक्षत्रेव प्रतिभाति । अत्रैवोपविशावः ।

यज्ञशर्मा— (समन्ताद्विलोक्य) अतिविचित्रोऽयं विधातुः सर्गक्रमः । मनुष्याणामिव द्रुमाणामपि तत्तदुचिता अवयवाः सृष्टाः ।

चन्द्रपालः— विचित्रतर इति वक्तव्यम् । यथा मनुष्याणां हस्तादय आहारसंपादनेन शरीरं वर्धयन्ति तथा वृक्षाणामपि शाखादय आकाशात् इङ्गालवायोरादानेन शरीरस्योपवर्धका भवन्ति ।

यज्ञशर्मा— सखे, पशुपक्षिणामिव पादपानां शाखादय अवयवविशेषा इति त्वयैवोक्तं प्रसङ्गान्तरे । आपो हि भूम्यन्तःस्थाः, कथं ताभिर्वृक्षाणामुपचय इति महती मे विचिकित्सा ।

चन्द्रपालः — पुरतः प्रदृश्यमानस्यास्य पुंनागस्य बहिर्भाग एवा-

स्माकमद्य चक्षुर्गोचरः । धरान्तर्गतं तत्स्वरूपं कीदृगिति ज्ञातं चेत् सर्वं ते व्यक्तीभविष्यति ॥

**यज्ञशर्मा**— मित्रमणे, त्वं हि आलेख्यकर्मण्यतिचतुरः । तदुपदर्शय पुन्नागस्य यथावस्थितं स्वरूपम् ॥

**चन्द्रपालः** — सखे, किंचिदिवात्रावधेहि । इदं लिख्यते ।

इति विलिखति ।



पुन्नागवृक्षः ॥

# उपदेशसूक्तिमाला ।

श्यावाश्व आत्रेयः अश्विनौ देवावेवमाह्वयति— हे अश्विनौ देवौ, कन्यानामाह्वानं युवानौ यथा सेवेते; एवं मम स्तोत्रं युवां सेवेथाम् । "ब्रह्म जिन्वतमुत जिन्वतं धियः, क्षत्रं जिन्वतमुतजिन्वतं नृन्, धेनुर्जिन्वतमुतजिन्वतं विशः इति प्रार्थयतो ब्रह्मणो वेदस्य रक्षितृन् ब्राह्मणजातिं ब्राह्मणानां वैदिकानि कर्माणि च प्रीणयतम् । एवं प्रजापालिकां क्षत्रियजातिं प्रजाः शत्रुभ्यो रक्षणाय नियन्त्रितान् योधांश्च प्रीणयतम् । अथ च विशस्तैः पालनीया गाश्च प्रीणयतम्— इति श्यावाश्वः अश्विनौ देवौ प्रार्थयत इति समाम्नाये दृश्यते । ऋक् म. ७. सु. ३५. अत्र कर्मणां प्रीणनं हि कर्मसु ऋद्धेराधानम् । अन्यत्र कर्मविशेषे कर्मण ऋद्धिं भवन्तो ब्रुवन्तु इति यजमानः ऋत्विजः प्रार्थयमानो दृश्यते । अयं वेदभागस्त्रैवर्णिकानां वृत्तिं सूचयति ।

इत्थं विद्यानां रक्षणे प्रजापालनादौ लोकव्यापारे च व्यापृतान् त्रैवर्णिकान् नानारूपया परिचर्यया इतरे जनाः कर्मकाराः शिल्पिनश्च सेवन्ते ॥ १४ ॥

'स्वस्तिन इन्द्रो वृद्धश्रवा......दधातु' ऋक् (म. १. सू. ४९.) देवानामधिप इन्द्राख्यो देवः अस्माकं क्षेमं तनोतु । यः देवेषु मध्ये भूयिष्ठमार्यैः स्तूयते । यस्य चाज्ञामनुसरति पर्जन्यः प्रजानां वृष्टिरूपेण समृद्धेर्दाता ॥ १५ ॥

मातापितरौ नित्यं पुत्रैर्वन्दनमर्हतः ॥ यतः—

'यं मातापितरौ क्लेशं सहेते संभवे नृणाम् ।
न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ॥'

मातापितरौ पुत्राणां प्रजनने रक्षणे च महान्तं क्लेशं सहेते । तादृश-क्लेशस्य पर्याप्ता प्रतिक्रिया पुत्रैः कर्तुं न शक्यते शतमाने पुरुषस्यायुषः काले; "शतायुः पुरुषः" इति श्रुतिः । अतः भक्त्या श्रद्धया च युक्तः सन्, पुरुषः मातापितरौ सदा पूजयेत् । "मातृदेवो भव, पितृदेवो भव" इति पुरुषं शास्ति श्रुतिः। मातापित्रोर्विषये देवतातुल्यया वृत्त्या वर्तेत ॥ १६ ॥

नारीणामुत्तमं मण्डनं सुशीलम् ।
नराणामुत्तमं रूपमनवद्या विद्या ।
विद्याया उत्तमं मण्डनं विनयश्रीः ।
शूरस्य मण्डनं समितावपरावृत्तिः ।
संपदां मण्डनं सत्पात्रे विनियोगः ।
प्रतिज्ञायाः पालनं मानिनो मण्डनम् ।
धर्माणामुत्तमो धर्मः परोपकृतिः ।
दातृताया महिमा सौम्यता ।
गुरूणां मण्डनमन्तेवासिषु वत्सलता ।
संपदामुत्तमा संपत् अरोगदृढगात्रता ।
सत्यवदनशीलता वाण्या विभूषणम् ।
गिरीणामुत्तमो गिरिर्हिमवान् ।
नदीनामुत्कृष्टतमा नदी गङ्गा ।
धान्यानां राजा यवः ॥ १७ ॥

( क्रमशः )

अपारकारुण्यसौशील्यवात्सल्यौदार्यैश्वर्यसौन्दर्यमहोदधे,

---

गुणविशेषाणां प्रकर्षः प्रथममुच्यते–– **अपारेति** ॥ कारुण्यस्यापारत्वम् अवश्यदण्डनीयेष्वस्माद्दशेष्वपि प्रवृत्तेः; यथा–– 'वधार्हमपि काकुत्स्थः कृपया पर्यपालयत्' इति, स्वेनाप्युक्तम्– 'मच्छरैस्त्वं रणे शान्तस्ततः पूतो भविष्यसि' इति, 'गच्छानुजानामि रणार्दितस्त्वम्' इत्यादि च। न्यूनाधिकत्वदर्शनजनितावज्ञासाध्वसपरिहारार्थमिह सौशील्योक्तिः। तस्यापारत्वं विशेषज्ञेषु विरिञ्चादिषु विष्ण्वाद्यवतारैः, अनभिज्ञेषु च मत्स्यकूर्मादिषु तत्तत्स्वरूपैरवतारैः, निर्विशेषनीरन्ध्रसंश्लेषात्। वात्सल्यस्य अपारत्वं 'रिपूणामपि वत्सलः' इत्युक्तम्। औदार्यस्यापारत्वम् अर्थिषूदारत्ववचनहेतुभूतमर्थितप्रदाने स्वप्रयोजनाभिसंधिमत्त्वम्, संश्रितेभ्यः सविभूतिकं स्वात्मानं दत्त्वा तदनुबन्धिषु पशुमनुष्यपक्ष्यादिष्वपि अविश्रान्तत्वं वा; श्रूयते हि– 'नास्यावरपुरुषाः क्षीयन्ते' इति, 'नास्याब्रह्मवित्कुले भवति' इति च। ऐश्वर्यस्य कथनमिहानादिकालं स्वरक्षणविपरीतवृत्तान् केनचिद्व्याजेन स्वयमेव नियम्याभिमुखीकरोतीति ज्ञापयितुम्। तस्य अपारत्वम् 'संसारन्यूनताभीतास्त्रिदशाः परिपन्थिनः' इति न्यायेन ब्रह्मादिषु देवेषु सुग्रीवादिषु सुहृत्सु वा विरुन्धानेषु तानपि शरणागतानुगुणीकर्तुं समर्थत्वम्। सौन्दर्यस्य अपारत्वं विरुद्धप्रकृतीनां शूर्पणखादीनां सत्त्वस्थानामृषीणामप्यविशेषेण दृष्टिचित्तापहारितया तुष्टूषाजनकत्वम्, असद्वासनादिशामकत्वं च; यथोक्तं श्रीपौष्करे अर्चावतारप्रकरणे— 'सन्दर्शनादकस्माच्च पुंसां संमूढचेतसाम्। कुवासना कुबुद्धिश्च कुतर्कनिचयश्च यः। कुहेतुश्च कुभावश्च नास्तिकत्वं लयं व्रजेत्' इति। अतिसुन्दरनित्यविग्रहेण भगवतः परत्वानुसंधानं तत्सांनिध्यकारणमिति च तत्रोक्तम्— 'नित्यसिद्धे तदाकारे तत्परत्वे च पुष्कर। यस्यास्ति सत्ता हृदये तस्यासौ संनिधिं व्रजेत् ॥' इति। तत्सूचनार्थमैश्वर्यसौन्दर्ययोरिहाव्यवहितपठनम् ॥

'सर्वस्य शरणं सुहृत्' 'सुहृदं सर्वभूतानाम्' 'सर्वलोकशरण्याय'

**अनालोचितविशेषाशेषलोकशरण्य, प्रणतार्तिहर, आश्रितवात्सल्यैकजलधे, अनवरतविदितनिखिलभूतजातयाथात्म्य, अशेषचराचर-**

---

'सर्वयोग्यमनायासम्' इत्यादिप्रसिद्धस्वभावस्य वायसवानरराक्षसादिविशेषानादरेणाङ्गीकुर्वतस्ते मादृशजनेऽपि गुणवृत्तादिनिकर्षो न त्यागकारणमित्याह — **अनालोचितविशेषेति** ॥ अत्र विशेषशब्दविवक्षितमनालोचितगुणगणेति श्रीवैकुण्ठगद्ये व्यञ्जितम्। प्रपत्तेः सर्वाधिकारत्वमपि अनेन प्रकाशितम्। 'दुर्गसंसारकान्तारमपारमभिधावताम्। एकः कृष्णनमस्कारो मुक्तितीरस्य देशिकः' 'प्रणम्य कृष्णं सहसा' 'एकोऽपि कृष्णे सुकृतप्रणामः' इत्यादिषूक्तमल्पयत्नप्रसाद्यत्वमाह— **प्रणतार्तिहरेति** ॥ अनेन स्वस्य एवंविधावस्थाहेतुः अवतारविशेषोऽप्यनुसंहितः; उक्तं हि स्वयमेव— 'निरस्तेतरभोगाशो वरदं शरणं गतः' इति। अत्र प्रणतशब्दः प्रकृतानुगुण्यात् 'प्रपन्नार्तिहरं विष्णुम्' इत्याद्यनुसाराच्च प्रकृष्टप्रह्वीभावयुक्तप्रपन्नविषयो वा। प्रस्तुतावतारे व्यक्ततमं स्वस्मिन्नुपकारतमं च वात्सल्यगुणं पूर्वं द्विरुक्तमपि 'मित्रभावेन संप्राप्तम्' 'दोषो यद्यपि तस्य स्यात्' इत्यादिस्मरणाय पुनराह— **आश्रितेति** ॥ वात्सल्यगुणोदधौ विग्रहादिकं निमग्नं भवतीत्यभिप्रायेण एकशब्दः। अत एव हि सर्वज्ञत्वादौ स्थितेऽपि अविज्ञातृत्वाद्युक्तिः। उपायान्तरं स्वीक्रियतामित्यत्र 'अस्मान्वेत्थ परान्वेत्थ' इति प्रकारेण मादृशानामकिंचनानामधिकर्तव्यं हिततमं त्वमेव जानासि, त्वदायत्तानुकूल्यस्य च शेषवृत्तिविधानेऽपि 'न त्वं सुप्तो न वा गतः' 'सर्वज्ञस्य ते' 'त्वयाऽपि लब्धं भगवन्निदानीम्' 'यदि मे न दयिष्यसे' इत्यादिकं न विज्ञापनीयमित्यभिप्रायेणाह—**अनवरतेति** ॥ अनवरतनिखिलशब्दाभ्यां ज्ञानस्य कालतो विषयतश्च संकोचो व्युदस्तः। 'त्वमेवैवं कुरुष्व माम्' 'कुरुष्व मामनुचरम्' इत्यादिन्यायेन त्वदधीनव्यापारस्य मे त्वयैव प्रातिकूल्यनिवर्तनादिकमपि कार्यमित्याह— **अशेषचराचरेति** ॥ निखिलशब्दः स्वरूपस्थित्यादिनियन्तव्यकार्त्स्न्यपरः, सार्वकालिकनियमनकार्त्स्न्यपरो वा।

**भूतनिखिलनियमननिरत, अशेषचिदचिद्वस्तुशेषिभूत निखिलजगदाधार, अखिलजगत्स्वामिन्, अस्मत्स्वामिन्, सत्यकाम, सत्यसंकल्प, सकलेतरविलक्षण,**

---

आगमैराचार्यादिभिरन्तरात्मतया च बहुप्रकारं हि नियमनम् । न हि अविधेयं ते किंचित्, येन मे अभिमतं प्रतिबन्धाद्विलम्बेत, अलभ्यं वा स्यात्, इति भावः । परिपूर्णस्य मे त्वदङ्गीकारेण न किंचित्प्रयोजनमित्यत्राह— **अशेषचिदचिदिति** ।। न हि मदेकवर्जं तव सर्वशेषित्वम्, अतो ममाप्यतिशये तव चार्थः प्रकल्पत इति भावः । तथापि यथावस्थितरक्षापेक्षा तव नास्ति कथं च त्वं रक्षणीयः ? इति शङ्कायामाह— **निखिलजगदाधारेति** ।। गुणादिवत् त्वदपृथक्सिद्धविशेषणस्य ममापेक्षामन्तरेणैव मत्सत्तादिकं त्वयैव रक्ष्यते, तत्साफल्यार्थं रक्षापेक्षादिकमपि त्वयैव कारयितव्योऽहम्, न हि त्वदधीनसत्ताकस्य मे त्वन्निरपेक्षप्रवृत्तिः संभवतीत्याभिप्रायः । एवमेव हि शेषभूतानां स्वतन्त्रस्वामिना त्वयैव यथेष्टं स्वमुद्दिश्य विनियोगः क्रियते इत्याह—**अखिलजगत्स्वामिन्निति** ।। इष्टानिष्टप्रदानसाधारणेऽस्मिन् मद्विनियोगे किं तवायातमित्यत्राह— **अस्मत्स्वामिन्निति** ।। मदाचार्यसन्ततिसांमुख्येन ममैवंविधत्वत्संबन्धज्ञानाद्यवस्थाप्रदानरूपोपकारे प्रवृत्तेन त्वया शेषपूरणं कार्यमिति भावः । परिपूर्णतया पूर्वोपकारप्रत्युपकारनिरपेक्षस्य तव अकिंचननित्यसापेक्षसंश्रितरक्षणमात्मीयनित्यगुणपरित्राणमिति सूचयति— **सत्यकामेति** ।। सर्वशक्तेस्तव नित्यसूरिवर्गे मन्निवेशनमीषत्करम्, न हि त्वद्वृतं केनापि हन्तुं शक्यमित्याह— **सत्यसंकल्पेति** ।। तथाप्यपेक्षितार्थमन्यः कश्चिदाश्रीयतामित्यत्राह— **सकलेतरविलक्षणेति** ।। 'विष्णुपोतं विना नान्यत्किंचिदस्ति परायणम्' 'भवतां कथ्यते सत्यं विष्णुरेकः परायणम्' इत्यादिभिः अन्येभ्यस्तव मोक्षप्रदत्वादिरूपं विशेषं पश्यन्नहं मुमुक्षुः कमन्यमाश्रयेयम्; न हि परतन्त्रः कश्चित् स्वतन्त्रकृत्यं प्रार्थनीयः; न च त्वं परतन्त्र इति भावः । यद्यर्थिनं मां

**अर्थिकल्पक, आपत्सख, श्रीमन्, नारायण, अशरण्यशरण्य, अन-**

---

नाद्रियसे कथं तव औदार्यप्रथा जीवेदित्यभिप्रायेणाह— **अर्थिकल्पकेति**। अर्थी च कल्पकश्चेति विग्रहः। अर्थिनां कल्पद्रुम इति वा। उक्तं हि— 'स सर्वानर्थिनो दृष्ट्वा समेत्य प्रतिनन्द्य च' इति। अर्थिनः कल्पद्रुमा यस्य सः अर्थिकल्पक इति वा विवक्षितम्; यदगीयत— 'उदाराः सर्व एवैते' इति। अभिमतपुरुषार्थदानार्थमर्थिनामुत्पादकः शास्त्रादि मुखेनार्थित्वापादकश्चेति वा। एवं पूर्वोक्तस्याप्यौदार्यस्य अतिशयप्रदर्शने तात्पर्यादपुनरुक्तिः। 'ज्ञातं मया वसिष्ठेन' इत्यादिकमनुसंदधानः पाञ्चाली गजेन्द्रादिवदापन्नस्यानन्यगतिकस्य मम एतामापदमवेक्ष्य रक्षितुमर्हसी त्याह— **आपत्सखेति**। आपदि सखिवत् संरक्षक इत्यर्थः। विश्वसनीयत्वस्नेहविषयत्वादिसूचनाय सखिशब्दः। शत्रुमपि 'तस्मात्परिश्रान्त इति व्यवस्य न त्वा शरैर्मृत्युवशं नयामि' इत्यवोचत्॥

एवं द्वाभ्यामिष्टप्रापकत्वम्, अनिष्टनिवर्तकत्वं च दर्शितम्। अथ तत्र समानाभिप्रायतया नित्ययुक्तामखिलजगन्मातरं पुरस्कुर्वतो मे महान्तोऽप्यपराधास्त्वया क्षन्तव्या इत्याह— **श्रीमन्निति**॥ संबन्धगुणविभूतिप्रयोजनव्यापारास्ते मदुपेक्षया मन्दफला मा भूवन्, अत आत्मानं नातिवर्तेथा इत्याह— **नारायणेति**॥ उत्तरखण्डस्थापेक्षया पूर्वं श्रीमन्नित्याद्युक्तम्; इह तु पूर्वखण्डस्थापेक्षया उक्तैः स्वभावैः फलितमाह— **अशरण्यशरण्येति**॥ स्मर्यते हि— 'अगतीनां गतिर्भवान्' इति। अत एव अनालोचितेत्यादिना न पुनरुक्तिः, तत्र हि तारतम्यानादरे तात्पर्यम्। एतत्सर्वं व्याख्येयविवक्षितप्राप्यप्रापकाकारप्रपञ्चनम्। अस्म्यहमेवम्, एतावतापि किं त्वया लब्धम्, सर्वत्र हि शास्त्रार्थे अधिकारोऽपेक्षित इत्यत्राह— **अनन्यशरण इति**॥ तत्त्वविदोऽनन्यप्रयोजनस्य मम सिद्धोपायान्तरं नास्ति, 'अहमस्म्यपराधानाम्' 'न धर्मनिष्ठोऽस्मि' इत्याद्युक्तावस्थाविशेषविदश्च मे साध्योपायान्तरमपि नास्तीति प्रतिबुद्धोऽस्मि; अयमेव हि

न्यशरण: त्वत्पादारविन्दयुगलं शरणमहं प्रपद्ये ॥ अत्र द्वयम् ॥

पितरं मातरं दारान् पुत्रान्बन्धून्सखीन्गुरून् ।
रत्नानि धनधान्यानि क्षेत्राणि च गृहाणि च ॥

---

ममात्माधिकार इति भावः । इदं तु व्याख्येयस्थोत्तमपुरुषाभिप्रेतमिति ज्ञापनाय, अहमपि न मम शरणमिति व्यञ्जनाय च, अधिकोऽहंशब्दः । अथवा अनन्यशरण इत्युपायान्तरशून्यत्वम्, अहमित्यपायभीरुत्वम्, अतिशङ्काराहित्यं, प्रयोजनान्तरतदुपायपरित्यागित्वं, मोक्षार्थप्रपत्त्युन्मुखत्वं च व्यज्यते । एतत्सूचितः कार्पण्यविस्तरः प्रतिवचनवाक्येषु गद्यान्तरयोश्च द्रष्टव्यः । त्वदित्यादिना पूर्वखण्डपदक्रमानुसरणम् । त्वच्छब्दः शरण्यत्वोपयुक्तसर्वाकारवैशिष्ट्यपरः । पादेत्यादिकं प्रागुक्तार्थम् । अत्र द्वयमित्यस्य व्याख्यातप्रायमिति शेषः ; तात्पर्यं तु पूर्वमेवोक्तम् । यद्वा द्वयम्, अर्थानुसंधानेन सह एवमुक्तमिति वा, वक्तव्यमिति वा विवक्षितम् । वाक्यान्तरैः पुनः पुनः प्रपद्यत इति तु नाशङ्कनीयम्, एकसाध्यसिद्ध्यर्थं प्रपत्त्यावृत्तेः प्रतिषेधात्, इह साध्यान्तरायोगाच्च । पितरमित्यादिकं तु स्ववाक्यवन्निबन्धनसंवादमुखेन अनन्यशरणत्वादिकं विशदीकृत्य वक्ष्यमाण-[1]फलप्रार्थनाप्रास्तावनात्मकमिति द्वयार्थस्य समुदितोक्तिः । तथा ह्यत्र सोपाधिकभोग्यतदुपायत्यागं निरुपाधिकभोग्यतदुपायविशेषपरिग्रहं च स्पष्टयित्वा प्रसादय इत्यादिना सोढुमित्यन्तेनोत्तरखण्डस्य दोषनिवृत्तिप्रार्थना संगृह्यते । पित्रादीनां त्यागोक्त्या भृत्यादिचेतनान्तरत्यागः कैमुत्यसिद्धः । बन्धुशब्द इह सम्बन्ध्यादिपरः । रत्नानीत्यादिकमुत्कटभोग्यत्वभोगसाधनत्वानामचेतनान्तराणामुपलक्षणम् । चकारेण वा अनुक्तसमुच्चयः । प्रियेषु हितेषु च मोक्षतदुपायानुपयुक्तेषु कुत्रचित् सङ्गोऽपि न युक्त इति ज्ञापनाय पितरमित्यादिविविधोक्तिः ॥ एवं लोकसिद्धप्रियहितान्युदाहृत्य सर्वधर्मानित्यादिना शास्त्रवेद्यानि साधनानि साध्यानि चाह । तत्र सर्वधर्म-

---

1. फलप्रार्थनाप्रस्तावनात्मक...

सर्वधर्मांश्च संत्यज्य
सर्वकामांश्च साक्षरान् ।
लोकविक्रान्तचरणौ
शरणं तेऽव्रजं विभो ॥

---

शब्दः सिद्धसाध्यरूपसपरिकरधर्मकात्स्न्यर्थपरः । सर्वकामानिति हिरण्यगर्भादिपदपर्यन्तकाम्यविषयः ; अक्षरशब्द इह आत्ममात्रानुभवगोचरः । धर्माणां कामानां च उपयोगित्वेन वा पित्राद्युदाहरणम् । तच्च यथासंभवं द्रष्टव्यम् । पित्रादीनां त्यागश्चात्र काम्यधर्मोपयोगितया अर्थकामोपयोगितया वा अनुपादानम् । अत एव 'मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव' 'वृद्धौ च मातापितरौ' इत्याद्युक्तभगवदाज्ञानुपालनं न विरुध्यते। सर्वधर्मशब्देन मोक्षसाधनभूतोपासनवर्गसंग्रहेऽपि तन्निवृत्तौ 'विहितत्वाच्चाश्रमकर्मापि' इति न्यायेन वर्णाश्रमधर्माणामनिवृत्तिः । तदिह त्रैवर्गिकधर्मेषु प्रयोजनान्तरेषु मोक्षोपायान्तरेषु च साधारणं नैराश्यं त्यागः ; तत्र पुरुषार्थान्तरेष्वल्पास्थिरत्वादिदोषदर्शनान्नैराश्यम् । तत एव तदुपायेष्वपि मुक्तिसाधनेष्वन्येषु स्वावस्थादर्शनेन दुष्करत्वादिना नैराश्यमिति विशेषः । **संत्यज्य** सम्यक् त्यक्त्वा, सवासनं परित्यज्येत्यर्थः । यद्वा पञ्चाङ्गसंयुक्तायाः प्रपत्तेरङ्गत्वेनाङ्गित्वेन वा अनुपादानमिह धर्माणां त्यागः । सोऽयं प्रपत्त्युपकारकत्वबुद्धिविरहः संप्रतिपन्नेषु पुरुषार्थान्तरतदुपायेषु मुक्त्युपायान्तरेषु नित्यनैमित्तिकेषु च समान इति सहोक्तिः । लोकविक्रान्तचरणाविति चरणे लोकविक्रान्तत्ववचनमनाश्रितानामप्यात्मप्रकाशनेन सौलभ्यादिव्यञ्जकम् । लोकविक्रान्तेति व्यस्तं वा ; तदा तु लोकेषु विक्रान्तः अधिष्ठातेत्यर्थः । **ते** स्वतन्त्रस्वामिनः परमप्राप्यस्य च । विभुशब्देन फलप्रदानौपयिकगुणपौष्कल्यं व्यज्यते । यद्वा विभुशब्देन परत्वम्, ते इत्यनेन सौलभ्यं च संगृह्यते । **अव्रजम्** व्रजामीत्यर्थः । अनद्यतनत्वमत्राविवक्षितम् ; भूतत्वेन निर्देशस्तु कर्तव्यशेषनैरपेक्ष्यव्यञ्जनपरः । त्याज्यानां

त्वमेव माता च पिता त्वमेव
त्वमेव बन्धुश्च गुरुस्त्वमेव ।
त्वमेव विद्या द्रविणं त्वमेव
त्वमेव सर्वं मम देवदेव ॥
पिताऽसि लोकस्य चराचरस्य
त्वमस्य पूज्यश्च गुरुर्गरीयान् ।

---

त्यागस्य पूर्वमस्पष्टत्वादिह तत्प्रपञ्चने तात्पर्यम् ॥ उपायत्वमुपेयत्वं च 'माता पिता भ्राता' इत्यादिश्रुतिसिद्धसर्वविधबान्धवस्य नारायणस्यैवेत्यभिप्रायेण त्यक्तं सर्वं त्वमेवेत्याह--**त्वमेवेति** ॥ त्वत्पादेत्यत्र त्वच्छब्दाभिप्रेतं च अनेन विशदीकृतम् । सर्वेषां जन्तूनां सर्वेषु जन्तुषु सर्वविधोपकारकत्वं त्वयि समुचितमित्यभिप्रायेण प्रत्येकं त्वमेवेति सावधारणावृत्तिः । मातापित्रादयो हि तत्प्रयुक्तास्तत्सहकृताश्च तदभिमतयत्किंचित्करणेनोपकुर्युः, अयं चानन्यप्रयोज्यो निरपेक्षश्च स्वेच्छयैव सर्वप्रकारेणोपकरोति । **माता** प्रलयदशायामुदरे स्थापयित्वा प्रसवनात् । प्रियप्रवर्तकत्वादिभिश्च पिता ; 'अहं जीवप्रदः पिता' इति ह्याह । हितप्रवर्तकश्च बन्धुः संबन्धान्तरेणाप्यहितनिवर्तनार्हः । **गुरुः** 'गुशब्दः--' इत्याद्युक्तान्धकारनिरोधित्वात् ; तत्र चासौ गुरुशरीरक आदिगुरुश्च । **विद्या** उपायभूतविद्याप्रवर्तकत्वात् तत्फलप्रदत्वाच्च, अकिंचनानामुपासनरूपविद्यायाः स्थाने निवेशाद्वा । **द्रविणम्** 'अमृतं साधनं साध्यं यं पश्यन्ति मनीषिणः' इत्युक्तात् साधनत्वात्, साध्यत्वाच्च । त्वमेव सर्वमिति उक्तानुक्तसर्वकात्स्न्र्यपरम् । **मम** तत्त्वविदोऽकिंचनस्य त्यक्तान्यसाध्यसाधनस्य त्वयि न्यस्तभरस्य च । देवदेवेति सर्वप्रकारोत्कर्षपरम् । एवं स्वविषयेऽनुसंहितस्य सर्वविधबन्धुत्वस्य सर्वविषयत्वेन निरुपाधिकत्वं सूचयति— **पितासीति** ॥ **लोकस्य** हिरण्यगर्भादिजन्तुजातस्य । **पूज्यश्च** पितृत्वगुरुत्वादिभिः सर्वकर्माराध्यत्वश्रुतेश्च समाराध्यः । 'गरीयान् ब्रह्मदः पिता' इत्युक्तमाह–**गरीयानिति** ॥ 'गरीयान् पूज्यतमः' इति तु भाष्योक्तम् ।

न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रतिमप्रभाव ॥
तस्मात्प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम ।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियायार्हसि देव सोढुम् ॥

---

**लोकत्रये** बद्धमुक्तनित्यरूपचेतनवर्गत्रये । यद्वा लोकत्रयशब्देन सर्वलोकवर्तिनां लक्षणा, प्रभावतोऽप्रतिमत्वस्य कण्ठोक्तत्वात् । 'न त्वत्समोऽस्ति' इत्यादिकमिह कारुण्यादिषु योजितम् ॥ **तस्मात्** तवैव सर्वविधबन्धुत्वात्, प्रभावतः कारुण्यादिगुणैश्च सर्वाधिकत्वात्, त्वद्विषयापराधस्य पित्रादिसर्वविषयापराधरूपत्वात् सर्वविषयापराधनां त्वदाज्ञातिलङ्घनरूपत्वेन त्वदपराधत्वाच्चेति भावः ! प्रणम्येत्यादिकं प्रपद्य इत्यस्य विवरणम् । प्रकृष्टप्रह्वीभावश्चात्र प्रकरणात् प्रपत्तिरूपः । स च पूर्वकृत एव फलविशेषप्रार्थनार्थमिहानूद्यते । कायप्रणिधानमत्र स्वरक्षणार्थस्वव्यापारान्तरनिवृत्तिव्यञ्जकमात्रम् । प्रणम्य प्रसादये प्रपदनरूपं प्रसादनमनुतिष्ठामि । भक्तिवत् प्रपत्तिरपि प्रसादनविशेषः । मदिष्टविघातानिष्टप्राप्तिहेतुभूतमत्कृतापराधजनिताप्रीतिरूपकालुष्यरहितं करोमीत्यर्थः । **त्वां** स्वतः सर्वभूतानां सुहृदं मदपराधात्कलुषितबुद्धिम् । **अहम्** अकिंचनोऽनन्यगतिः त्वत्पत्न्या दत्तवरः त्यक्तत्वदितरसाध्यसाधनश्च । **ईशम्** सापराधनिग्रहादिसमर्थम् । **ईड्यम्** क्षमादिभिः स्तुत्यम् । 'न तस्येशे कश्चन तस्य नाम महद्यशः' इति श्रुत्युक्तम् अनेन पदद्वयेन दर्शितम् । क्षुद्रोऽपि जन्तुः संबन्धविशेषादपराधं सहते, किं पुनस्त्वम् इत्यभिप्रायेण पित्रादिदृष्टान्तः । **प्रियः प्रियाय** मत्प्रीतिविषयस्त्वं त्वत्प्रीतिविषयाय मह्यम् । 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इति हि स्वयमेवात्थ । अर्हसि देव सोढुमिति वक्ष्यमाणसंग्रहः । संसारमोचनमपि ते लीलैवेति देवशब्दाभिप्रायः । एतावदन्तं पूर्वखण्डविवरणमिति केचित् ।

# देशवृत्तान्तः ॥

कुम्भघोणे दोरैस्वाम्यार्य इति कश्चन उदारप्रकृतिर्महाशयः वेदान्तपाठशालास्थापनाय लक्षं रूपिका मूलधनत्वेनादात् इतीदं नितरां प्रमोदस्थानमार्यमततत्वावलम्बिनामास्तिकानाम् ।

तेनाल्लिजनपदान्तर्गतेषु ग्रामेषु संस्कृतभाषाभिवृद्ध्यर्थं 'विबुधविद्याभिवर्द्धिनी' इति काचन सभा कोल्लूर्ग्रामे प्रतिसंवत्सरं मिलति । पुरस्करोति च यथार्हसंभावनादिभिः वेदशास्त्रादिषु परिनिष्ठितान्विदुषः ।

केरलेषु 'गुरुवायूर्' नगरे श्रीकृष्णदेवालये कैङ्कर्यपराणां ब्राह्मणानामन्येषां च अत्यन्तोपकाराय देवस्थानकार्यावेक्षणाधिकृतेन 'कोन्दिमेनवेन' स्थापिता वेदशास्त्रपाठशाला अनुदिनमभिवर्धत इति शृण्वन्तो वयं नितरां तुष्यामः ।

---

# SANSKRIT PUBLICATIONS

OF THE

## Sri Vani Vilas Press, Srirangam.

### Sri Vani Vilas Sastra Series.

1. **Adhvaramimamsa Kutuhala Vritti** Edited by S. Kuppuswamy Sastrigal M.A. To be published in 30 parts. Six Parts now ready. Each part Re. 1—0
3. **Bhagavadgita** with the Bhashya of Sri Ramanuja and the Tatparyachandrika of Sri Vedanta Desika. Edited by Rao Bahadur M. Rangachariar M.A. To be published in 16 parts. Two parts now ready. Each Part .. .. .. As. 0—8
4. **Kavyalankarasutravritti** of Vamana with the commentary called Kamadhenu of Gopendra Tippa Bhupala .. .. Rs. 2—8
5. **Brahmasutravritti** of Sri Sadasivendra Sarasvati with a sketch of the author's life in English Rs. 2—0

### Sri Vani Vilas Sanskrit Series.

1. **Parvati Parinaya** of Vamana Bhatta Bana .. .. .. As. 0—8
2. **Vasavadatta** of Subandhu with an elaborate commentary .. .. Rs. 2—0
3. **Priyadarsika** of Sri Harsha .. As. 0-12
4. **Yadavabhyudaya** of Sri Vedanta Desika with the commentary of Sri Appaya Dikshita. To be published in 6 vols. Vols. I & II now ready. Each volume .. .. Rs. 1—8
5. **Malavikagnimitra** of Kalidasa Re. 1-12
6. **Achyutarayabhyudayam** of Sri Rajanatha with commentary. To be published in 2 parts. Part I now ready .. .. .. Re. 1—0
10. **Subhashitanivi** of Sri Vedanta Desika with the commentary of Srinivasa Suri .. .. .. As. 0—8
15. **Meghasandesa** of Kalidasa with the commentary called 'Vidyullata' of Purna Sarasvati .. .. Re. 1—0
16. **Vemabhupalacharitam** of Vamana Bhatta Bana .. .. Rs. 2—0

### Two Annas Library of Sanskrit Stotras.

1. **Soundarya Lahari** by Sri Sankara B gavatpadacharya.
2. **Sivananda Lahari** by Do.
3. **Akhyashashti and Sivabhaktikalpalat** by Sri Sridhara Venkatesarya, other known as Tiruvasanallur Aiyyaval.
4. **Sadasivendrastuti** by the present Jagadguru of Sringeri, with a portra Sadasiva Brahma.
5. **Sarada Stotras** by Do.
6. **Sarada Navaratri Stotras** by Do.
7. **Miscellaneous Stotras** Part I by Do.
8. Do. Part II by Do.
9. Do. Part III by Do.
10. **Dayasatakam** by Sri Sridhara Venkat rya.
11. Do. by Sri Vedanta Desika.
12. **Bhujanga Stotras** by Sri Sankara Bh vatpada.
13. **Mahimna Stotras**—Sakti Mahimna Durvasas and Siva Mahimna by Pus danta.
14. **Stotras of Sri Vedanta Desika** Part I.
15. Do. Part II.
16. **Lalitastavaratnam** by Durvasas.

### Sahasranama Series.

1. **Lalita Sahasranama** .. As. 0
2. **Vishnu Sahasranama** .. ,, 0
3. **Lakshmi Sahasranama** .. ,, 0

### Sanskrit Copy Books.

**Nos. 1, 2 and 3, now ready.**

**No. 4 will be published shortly.**

**Price per 100 copies** Rs. 6—4—0

**Each copy** ,, 0—1—3

*N. B.—For purchasers of 10 copies at a t one copy will be given gratis.*

2

THE

# SANSKRIT JOURNAL

OR

# ॥ सहृदया ॥



VOL. XIV.

NO. 3.

EDITOR R. KRISHNAMACHARIAR, M.A.

## CONTENTS.



PRINTED AT THE SRI VANI VILAS PRESS, SRIRANGAM.

PUBLISHED AT MADRAS.

Registered No. M. 103.

# विषयाः ।



# Sahridaya.

1. Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.

2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.

3. The last forme of every issue is devoted to publishing rare and useful works.

4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.

5. Literary contributions may be addressed to the Editor and all business communications to the Manager Sahridaya office, Puraswaukum, Madras (N. C.).

6. Annual subscription is Rs. 3 only, including postage

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. २.] सौम्यवर्ष ज्येष्ठमासः । [संचि. ३.

## सुभाषितानि ।

जनकः स्थाणुविशेषो
जातिः काष्ठं भुजंगमैः सङ्गः ।
स्वगुणैरेव पटीरज
यातोऽसि तथापि महिमानम ॥ १ ॥

न वारयामो भवतीं विशन्तीं
वर्षानदि स्रोतसि जह्नुजायाः ।
न युक्तमेतत्तु पुरो यदस्याः
तरङ्गभङ्गान्प्रकटीकरोषि ॥ २ ॥

भुक्ता मृणालपटली भवता निपीता-
न्यम्बूनि यत्र नलिनानि निषेवितानि ।
रे राजहंस वद तस्य सरोवरस्य
कृत्येन केन भवितासि कृतोपकारः ॥ ३ ॥

॥ श्रीः ॥

# ॥ मेघसंदेशविमर्शः ॥



रसिकजनरसायनस्यास्य काव्यस्य अन्यादृशीं सुषमामापादयन्ती रमणीयमपूर्वमर्थजातं विद्योतयन्ती विष्वग्रसवर्षमास्वादयन्ती विद्युल्लतानाम्नी काचन व्याख्या सौदामिनीवाम्बुदसंचयात् श्रीवाणीविलासालयादद्य प्रस्फुरन्ती नितरामानन्दयति सहृदयसमाजम् । कांचनात्यद्भुतां नवीनां सरणिमाश्रित्य कविकुलचकोरचन्द्रस्य सूक्तिष्वनितरसाधारणं माधुर्यमनया व्याख्यया विशदयन्पूर्णसरस्वतिः क्वचित्सूक्तीनामर्थगौरवं निपुणं ज्ञापयति; क्वचिच्छब्दानां प्रयोगचातुरीं सम्यगवबोधयति; कुत्रचिन्महाकवेराशयविशेषान् सरसं विचारयति; क्वचिदलङ्काराणां चमत्कृतिं स्फुटमनुभावयति; कुत्रचिद्रसानुभवकलां साधु शिक्षयति; कुत्रचित्काव्यान्तरप्रोक्तानां सदृशानामाशयानां तरतमभावं सोपपत्तिकमवधारयति; तत्र तत्र पद्यानामर्थानुसारेणात्मगुणाधायकान्धर्मानुपदिशति; किं बहुना—सहृदयहृदयंगमं रमणीयं कमपि पन्थानं व्याख्यातृणां प्रदर्शयति ।

निरर्गलपदाटोपरसभावनिरन्तरामिमां व्याख्यां पूर्णसरस्वतेः आख्यायिकामिवानुवाचयन्तो वयं पूर्वं रघुवंशविमर्शावसरे प्रतिश्रुतस्य मेघदूतविमर्शस्य नातीवावश्यकतां पश्यन्तो विद्युल्लताभूषितस्य मेघस्य गुणदोषादिकं किञ्चिदिवात्र विचारयामः ।

सन्त्येवास्य काव्यस्य दक्षिणावर्त-नाथ-मल्लिनाथादिभिर्विरचिताः, अन्याश्च सारोद्धारिणी-वल्लभादयो व्याख्याः । अथापि विद्युल्लतैव मेघस्य स्वरूपं कार्त्स्न्येन विशदयन्ती रसिकाननुरञ्जयति। तथा हि—– काव्यस्यास्य परिशीलनेन किं फलमुपलभ्यते? इत्यादावेवानुविमृशन् पूर्णसरस्वतिः एवं निर्दिशति—– 'अत्र तावन्मृदुलचेतसां व्युत्पाद्यानामक्लेशेनैव विशिष्टशब्दार्थव्युत्पत्तिः, तत्तद्देशविशेषव्यवहारवेदनम्, पुण्यतीर्थदेवायतनादिसंकीर्तनेन दुरितक्षयः, कीर्तिरलघीयसी, राजादिवल्लभतया द्रविणसंपत्तिः, कामसूत्रादिविद्यासु गीतकलासु च कौशलम्; संभोगविप्रलम्भरूपश्रृङ्गारसागरकर्णधारत्वम्, पतिव्रताधर्मपरिज्ञानम्, सहृदय इति सदसि सत्कृतिः, मन्दीकृतपरब्रह्मानन्दसंदोहश्च रसास्वाद इत्यादीनि परःशतं प्रयोजनानि' इति ।

'काव्यहृदयगह्वरगोपितमुपह्वरे सकलपुमर्थसाधनसमर्थमुपदेशरत्नम्' इत्थं निरूपयति विद्युल्लता—– 'महात्मनोऽपि यक्षस्य महिलासङ्गतरङ्गितानङ्गरसपारतन्त्र्यदोषस्य स्वाधिकारप्रमादः, तेन स्वामिकोपः, तस्माच्छापोपलम्भः, ततः स्वमहिमभ्रंशः, प्रियावियोगवेदनासन्तानानुभवश्चेत्यनर्थपरंपरा संपतिता; अतो विषयेष्वतिसक्तिरनर्थाय' इति ।

**कश्चित्कान्ताविरहगुरुणा स्वाधिकारप्रमत्तः**
**शापेनास्तंगमितमहिमा वर्षभोग्येण भर्तुः ।**
**यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु**
**स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥ १ ॥**

'कान्ताविरहगुरुणा' इत्यत्र—– 'स्वप्नेऽप्यविदितविरहदुःख-

स्य यक्षस्य 'ईदृशो दयितावियोगः' इति शापेनैवोपदिष्टत्वात् स गुरुरित्युच्यते अज्ञातज्ञापकत्वसामान्येन.... इति व्याकुर्वन् तेनैव कान्तातिसक्तिमूलत्वमपि प्रमादस्यावगमयन्, उत्तरमेघे 'तं तमात्माभिलाषं निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु' इति पद्ये क्षपाशब्दस्वारस्यकथनप्रसङ्गे 'शापमोक्षादूर्ध्वं पुनरीदृशव्यसनापातपरिहाराय स्वाधिकारावधानेनैव दिवसानामतिवाहनात् भोगयोग्ये निशामुख एव भोगानुसेवनादसंभाव्यविरहत्वमपि ध्वन्यते' इत्यादि वर्णयन्पूर्णसरस्वतिः सहृदयान् रसयतीत्यहो! सरणिरेषा न दृष्टचरी व्याख्यानान्तरेषु ।

कीदृशी वृत्तिरस्य यक्षस्य परिकल्पिता? कथं वानेनापराद्धम्? इत्यादिकमसौ टीकाकारः, मल्लिनाथो वा न विचारयति । कुबेरेणोद्यानद्वाररक्षणेऽधिकृतोऽयमनुचरो भर्तृनियोगमुल्लङ्घ्य, अन्यत्र गतोऽभूत् । तदानीमैरावत उपवनमुच्छृङ्खलं प्रविश्य कुसुमद्रुमाणामुच्छेदमकरोत्— इत्यादिकथा प्राचीनव्याख्यानेषु केषुचित्पठ्यते । कैलासनाथस्य पूजार्थमनुदिवसं प्रातः कुसुमानयनाय नियुक्तोऽसावनुचरः, आलस्याद्रात्रावेवान्यमुखेन कमलमुकुलान्याहृत्य प्रातः पूजार्थमाहरन् तदानीमेव विकसद्भ्यः पद्मेभ्यो निःसरद्भिर्मधुपैरभिहताङ्गुलिना धनपतिना शप्तः-- इति केचन कथयन्ति ।

तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी
नीत्वा मासान्कनकवलयभ्रंशरिक्तप्रकोष्ठः ।
आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं
वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श ॥ २ ॥

कविरसौ रामगिर्याश्रमेषु यदृच्छया भ्रमन् चित्रकूटशृङ्गेषु लग्नानम्बुदानसकृन्निरीक्ष्य किमप्यमन्दं प्रमोदमन्वभवदिति रघुवंशे 'शृङ्गाग्रलग्नाम्बुदवप्रपङ्कः । बध्नाति यो बन्धुरगात्रि चक्षुर्दृप्तः ककुद्मानिव चित्रकूटः' इत्यनेनापि ज्ञायते ।

'महिषाश्च वराहाश्च मत्तमातङ्गरूपिणः' इति पुराणसर्वस्वोक्तरीत्या सत्स्वपि नीलमेघस्य सादृश्यमावहत्सु अनेकेषु वस्तुषु, हिमवत्सानुषु वप्रक्रीडापरिणतगजमात्मनः शापकारणमैरावतमनुध्यायन् गजसाम्यमम्बुदस्योत्पश्यति यक्ष इत्यपि संभाव्यते ।

कनकवलयभ्रंशरिक्तप्रकोष्ठः-- इह कनकवलयस्यैकस्य धारणं मङ्गलार्थमथवा विरहचिह्नद्योतनार्थमित्यादि वर्णयन्पूर्णसरस्वतिः शाकुन्तलात्समानार्थकानि वाक्यान्युद्धृत्य उदाहरन् महाकवेराशयं सम्यगवबोधयति । इदं पद्यमनया व्याख्यया विमृशन्तो वयं रघुवंशे 'आमुञ्चतीवाभरणं द्वितीयमुद्भिन्नविद्युद्वलयो घनस्ते' इत्यत्र मल्लिनाथप्रोक्तमाशयं साध्वित्येवाभिनन्दामः ।

**तस्य स्थित्वा कथमपि पुरः केतुकाधानहेतो-**
**रन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ ।**
**मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः**
**कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥ ३ ॥**

अनुचरो राजराजस्य-- इत्यनेन 'धिक् पारतन्त्र्यस्य दौरात्म्यम्' इति कविहृदयं सरसमुपदिशति पूर्णसरस्वतिः । मल्लिनाथस्तु 'राजाहःसखिभ्यष्टच्' इति टच्प्रत्ययमेवानुस्मारयति ।

प्रत्यासन्ने नभसि दयिताजीविताालम्बनार्थी
जीमूतेन स्वकुशलमयीं हारयिष्यन्प्रवृत्तिम् ।
स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै
प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार ॥ ४ ॥

'अत्र कुशलशब्देन प्रियतमापुनःसमागमोत्सवहेतुभूतमेतावतो मासान् प्राणसंधारणमेवोच्यते' इति व्याकुर्वन् 'क्षणमप्यवतिष्ठते श्वसन्यदि जन्तुर्ननु लाभवानसौ' इति रघुवंशप्रोक्तं वाक्यं दृष्टान्ततयोदाहरति विद्युल्लता । न ह्यत्र स्वारस्यमौचित्यं वा पश्यामः । उदाहृतस्थले वसिष्ठः शिष्यमुखेन इन्दुमतीं मृतामनुशोचन्तमभिषङ्गजडमजं 'मूर्ख, एतावतीः समाः तया सह अनितरसाधारणो भोगस्त्वयान्वभावि किल; प्रकृतिर्हि शरीरिणां मरणम्, जीवितं तु विकृतिः; यदेषा इयदवधि जीवितमधारयत्, महदिदं ते भागधेयम्' इति तत्त्वमुपदिशति । इह तु 'एति जीवन्तमानन्दो नरं वर्षशतादपि' इति न्यायेन भावि सुखमुत्पश्यति यक्षः ।

धूमज्योतिःसलिलमरुतां संनिपातः क्व मेघः
संदेशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ।
इत्यौत्सुक्यादपरिगणयन्गुह्यकस्तं ययाचे
कामार्ता हि प्रणयकृपणाश्चेतनाचेतनेषु ॥ ५ ॥

प्रणयकृपणा इति हृदयंगमं पाठमनुवाचयन्तः काव्यज्ञाः 'सुकविवचसि पाठानन्यथाकृत्य मोहाद्रसगतिमवधूय प्रौढमर्थं विहाय' इत्यनुशोचतः पूर्णसरस्वतेर्विषादः स्थान एवेत्युररीकुर्युः ।

**जातं वंशे भुवनविदिते पुष्कलावर्तकानां**
**जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः ।**
**तेनार्थित्वं त्वयि विधिवशाद्दूरबन्धुर्गतोऽहं**
**याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ॥**

'भुवनविदिते' इत्यत्र 'यतस्ते सुरकरिकरपीवरप्रचण्डधारासारसंप्लावितजगदण्डपिण्डा देवकार्याधिकारिणः' इति व्याकुर्वन्पूर्णसरस्वतिः सत्यमेव प्रलयसमयमासन्नमनुभावयतीव ।

'दूरबन्धुः'—इह भार्यैव बन्धुरिति सोपपत्तिकं विशदयन्, 'वैदेहिबन्धोर्हृदयं विदद्रे' इति समानार्थकं वाक्यमुदाहरन्, आदावेव प्रदर्शितं मैथिलीं प्रति राघवेण हनूमन्मुखेन प्रेषितस्य संदेशस्य अस्य चोपमानोपमेयभावमधुरं कवेर्हृदयं तत्र तत्र स्फुटं विद्योतयति ।

अधिगुणे— 'अधिकगुणे' इति मल्लिनाथो वदति । पूर्णसरस्वतिस्तु प्रथमम् 'जानामि त्वाम्' इत्यत्र 'अहमेवैतत्सर्वं साध्ववगच्छामि, न तु यस्यकस्यचिद्वचनाद्विश्वसिमि' इति व्याख्याय, अनन्तरम् 'अधिगुणे' इति पदस्य 'अधिगतगुणे' इति निपुणमर्थमुपदिशति ।

पुष्करावर्तकानाम्— 'पुष्कराश्चावर्तकाश्च केचिन्मेघानां श्रेष्ठाः' इत्येतावता परितुष्यति संजीविनी । विद्युल्लतापि तेषां सुरकरिकरपीवरासारान् स्मारं स्मारं भीतभीतेव जोषभावमास्थिता । किं कुर्मः ? 'पुष्करा नाम ते मेघा बृहतस्तोयमत्सराः । पुष्करावर्तकास्तेन कारणेनेह शब्दिताः ॥' इति पुराणसर्वस्वे उपलभ्यते । विष्णुपुराणेऽपि 'मेघास्त्रिविधाः— अग्निजाः वायुजाः पक्षजाश्चेति । ये

हि कुलिशच्छिन्नेभ्यो नगानां पक्षेभ्यः समुत्पन्नाः, ये चाग्रभागेषूद-कधारामावहन्ति त एव पुष्करावर्तका इति ।

**संतप्तानां त्वमसि शरणं तत्पयोद प्रियायाः**
**संदेशं मे हर धनपतिक्रोधविश्लेषितस्य ।**
**गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां**
**बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ॥ ७ ॥**

धनपतिक्रोधविश्लेषितस्य— अत्र 'धनपतेः कुबेरस्य क्रोधेन' इत्येतावन्मात्रेणोच्छ्वसिति संजीविनी । विद्युल्लता तु 'निधिपतेः क्रोधेन, न पुनरितोगतेन महापराधेन । निर्निमित्त एव काशं कुशं वावलम्ब्य श्रीमतामनपेक्षितापरोपतापः कोप इति भावः' इति रम-णीयं भावमालिखति हृदये ।

इह धनपतित्वनिर्देशेन, कुबेरोऽयं स्वयं कुत्सितकलेबरः, अविज्ञातसौकुमार्यवृत्तान्तः, असूयति विलासिजनेभ्यः सुभगेभ्य इत्यपि ध्वनिः । चरणत्रयेण दन्ताष्टकेन चोपेतो द्रष्टॄणामुद्वेगकरः **कु-बेरः** इति पौराणिकी काचन कथा श्रूयते ।

गन्तव्या ते वसतिरलका— महाकवेः अमरावत्यपेक्षया अल-कायाम्, नन्दनापेक्षया चैत्ररथे चात्यन्तमादर इति 'न मैथिलेयः स्पृहयांबभूव भर्त्रे दिवो नाप्यलकेश्वराय', 'एको ययौ चैत्ररथप्रदे-शान्', 'वस्वौकसारामभिभूय' इत्यादिनावगम्यते ।

बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या— अनेन 'असौ महाकालनिकेतनस्य वसन्नदूरे किल चन्द्रमौलेः । तमिस्रपक्षेऽपि सह प्रियाभिः ज्योत्स्नावतो निर्विशति प्रदोषान् ॥' इत्यन्यत्राविष्कृतां कवेः संभावनामनुस्मारिताः स्मः । (क्रमशः)

# स्थावरतत्त्वदर्शनम् ।

यज्ञशर्मा— सखे! सकलास्वपि कलासु निष्णातोऽसि । अतीव हृदयंगमेयं भवद्भिर्लिखिता प्रतिकृतिः । अहो! ते हस्तलाघवम् । यत्सत्यमालेख्यगतस्य पुरतः भूमौ प्ररोहतश्च पुन्नागस्य तारतम्यमापाततो नावगम्यते । वयस्य, सम्प्रति अवयवविशेषान् विविच्य सम्यक् बोधय ।

चन्द्रपालः— मित्र! अत्र भूमावन्तर्हितो भागः मूलमिति कथ्यते । एतदेव वृक्षस्याभिवृद्धौ निदानम् ।

यज्ञशर्मा— कथमेतत् वृक्षस्याभिवर्धकं भवति?

चन्द्रपालः— शृणु । मूलानि हि यावज्जलमुपलभ्यते, तावद्भूमावन्तः प्रविश्य उदकमाकृष्य स्वाभिवृद्ध्यनुकूलं द्रव्यजातं संपादयन्ति ।

यज्ञशर्मा— अथ कुत इयं वृक्षाणां पर्णसहस्रसृष्टिः ।

चन्द्रपालः— सखे, आकाशात् इङ्गालवायोरादानार्थं पर्णाः सृष्टाः सर्वज्ञेन ।

यज्ञशर्मा— किमेतत्? मूलस्योपरि दक्षिणभागे कन्दुकाकारं किंचन सूक्ष्मं वस्तु दृश्यते। किमेतदेव क्रमेण शाखा भवति ।

चन्द्रपालः— पादपस्य बीजं खल्विदम् ।

यज्ञशर्मा— किमेतदपि प्रकाण्डवत् भुवमुद्भिद्य प्ररोहेत्?

**चन्द्रपालः**— नेदं प्ररोहेत्। किन्तु गच्छता कालेनान्तरेव विनश्य स्वयमदृश्यतामुपयाति ।

**यज्ञशर्मा**— काश्चन शाखा अतिह्रस्वाः । काश्चन दीर्घदीर्घाश्च रोहन्ति । किमत्र निदानम् ?

**चन्द्रपालः**— प्रतिशाखमग्रे अतिमृदुलानि पल्लवानि सन्ति । तेषां वृद्धौ शाखा अपि वर्धन्ते ।

**यज्ञशर्मा**— सखे! आश्चर्यमाश्चर्यम् । अस्मिन् पादपे प्रतिपर्व पत्राणि परितो विपरिवृत्तान्येव प्ररोहन्ति ।

**चन्द्रपालः**— आम् । यदि पत्राणि सर्वाण्यपि एकया रीत्या प्राचीमुखानि प्रतीचीप्रवणानि वा प्ररोहेयुः, तदा तरणि-किरणाः उपरितनैः पत्रैः कुण्ठितगतयः अधो विद्यमानेषु पत्रेषु न पतेयुः किल । अत एव पत्राणामेवंरीत्या विपरिवर्तनेन रविकिरणाः सर्वतः प्रसरेयुः । वातश्च सुलभसंचारो भवेत् । एवं वृक्षाः सम्यक् परिपुष्टाः प्ररोहेयुः । उक्तं किल वेदे 'सविता वै प्रसवानामीष्टे' इति ।

**यज्ञशर्मा**— सखे, पुंनागवृक्षस्य स्वरूपं सम्यगवगतमिदानीम् ।

**चन्द्रपालः**— एवमेवान्येषामपि पादपानां स्वरूपाणि सूक्ष्मदृष्ट्या वेदितव्यानि ।

**यज्ञशर्मा**— एहि, एतां चन्दनवाटिकां प्रविशावः ।

**चन्द्रपालः**— अहो! सौरभातिशयश्चन्दनतरूणाम्—

'यद्यपि चन्दनविटपी
विधिना फलकुसुमवर्जितो विहितः ।

निजपरिमलैः परेषां
तथापि संतापमपहरति ॥'

यज्ञशर्मा— अवहितो गच्छ, फणिनामावासभूतोऽयं चन्दनषण्डः ।

चन्द्रपालः— मित्र, सत्यं वदसि । एषोऽयं कृष्णसर्पः सौरभाकृष्टचेताः किमप्यन्यदचेतयमानः सुखं शयानो दृश्यते ।

यज्ञशर्मा— ग्रन्थेष्वेवमसकृत्पठनेन मयैवमुक्तम् । न तु स्वानुभवेन । दर्शय दीर्घपृष्ठम् ।

चन्द्रपालः— पश्य, इतो दक्षिणतस्तरुशाखायामास्ते (इति तर्जन्या निर्दिशति)

'अयि मलयज महिमायं
कस्य गिरामस्तु विषयस्ते ।
उद्गिरतो यद्गरलं
फणिनः पुष्णासि परिमलोद्गारैः ॥'

यज्ञशर्मा— सुहृन्मणे, भुजङ्गपरीतोऽयं निकुञ्जः । बिभेम्यत्रावस्थातुम् । तदन्यत्र अपक्रमावः ।

चन्द्रपालः— इत एहि । दर्शनीयोऽयं पादपः । पश्य, एतस्य कुसुमानि हिरण्मयानीव द्रष्टॄणां लोचनान्येकपद एव आवर्जयन्ति ।

यज्ञशर्मा— आः ! अतिरमणीयेयं कुसुमशोभा । यदि पुनर्विधिरेतानि प्रसूनानि लोकोत्तरेण सौरभेणायोजयिष्यत्, तदा नियतं कमलादिकुसुमजातमनादरपदमभविष्यत् ।

चन्द्रपालः— सत्यम् । कुसुमवैभवेनैवास्य द्रुमस्य पुष्पराज इत्यभिख्या समजनि ।

यज्ञशर्मा— वनौषधिवर्गे अस्य नाम न विद्यते । तदमरसिंहेनायं न विदितः स्यादिति तर्कयामि ।

चन्द्रपालः— देशान्तरीयोऽयं वृक्षः, अस्मिन् देशे आगन्तुक इति कथयन्ति ।

यज्ञशर्मा— सखे, पुंनागापेक्षया एतद्वृक्षस्य शाखा अधिकाः समुपलभ्यन्ते ।

चन्द्रपालः— आम् । सम्यक् पश्यसि । शाखासु प्रतिवृन्तमेकमेव पत्रं प्ररोहति ।

यज्ञशर्मा— पुन्नागापेक्षया एतस्य वृन्तानि दीर्घतराणि च ।

चन्द्रपालः— इदमप्यवधेहि । पुन्नागवृक्षे प्रकाण्डं परिवेष्ट्य पत्राणि परितः प्ररोहन्ति । एतस्मिंस्तु शाखास्वेव प्ररोहन्ति ।

यज्ञशर्मा— पत्राणि च पुन्नागापेक्षया मृदुलतराणि ।

चन्द्रपालः— अत्र बहवो भागा विशिष्य वेदितव्या वर्तन्ते । तेषां नामानि सम्यगवधेहि ।

यज्ञशर्मा— एषोऽस्मि समाहितमनाः ।

चन्द्रपालः— प्रथमतः शाखां विचारयावः ।

यज्ञशर्मा— यथापूर्वमेषापि भूतले विलिख्यते चेत् सम्यगवधारयितुं शक्यते ।

चन्द्रपालः—साधु,

( इति विलिखति )



( पुष्पराजः )

यज्ञशर्मा—सखे, दर्शनीयं ते लेख्यम् । वृक्षशाखैव भुवि पतितेति प्रतिभाति । सम्यक् निरूपयामि ।

चन्द्रपालः—एतस्याधोभागे एकसंख्यानिर्दिष्टो भागः पर्वेति कथ्यते ।

यज्ञशर्मा—(स्मृतिमभिनीय) दर्शप्रतिपदोः सन्धिः खलु पर्वशब्देन व्यवह्रियते ।

चन्द्रपालः— ग्रन्थिभागस्यापि पर्वशब्देन व्यवहारः सुप्रसिद्ध एव ।

**यज्ञशर्मा**— (किंचिदिव विमृश्य) आः ज्ञातम् , युज्यते 'ग्रन्थिर्ना पर्वपरुषी' इत्यमरसिंहो व्याहरति ।

**चन्द्रपालः**— द्विसंख्यानिर्दिष्टो भागः पर्वणोर्मध्यरूपत्वात् पर्वमध्यमिति कथ्यते ।

**यज्ञशर्मा**— साधु ।

**चन्द्रपालः**— त्रिसंख्यानिर्दिष्टः पर्वणोः सन्धिरूपत्वात् पर्वसन्धिरित्युदीर्यते ।

**यज्ञशर्मा**— पर्वसन्धिरित्यपि नैघण्टुकैः कुत्रचित् पठितम् । (विमृश्य)

'स पर्वसन्धिः प्रतिपत्पञ्चदश्योर्यदन्तरम्' रूढोऽयं पर्वसन्धिशब्दः । अत्र तु पर्वणोः सन्धिरिति यौगिकः प्रयुक्तः ।

**चन्द्रपालः**— आम्, अत्र यौगिक एव । चतुःसङ्ख्यानिर्दिष्टस्तु वृन्तमिति कथ्यते ।

**यज्ञशर्मा**— स्थान एव । 'वृन्तं प्रसवबन्धनम्' इति नामलिङ्गानुशासने कथितम् ।

**चन्द्रपालः**— पञ्चसंख्यानिर्दिष्टस्तु पर्वपुच्छमिति कथ्यते ।

**यज्ञशर्मा**— युक्तमेवेदं पर्वपुच्छमिति नाम । यतोऽत्र पर्वणि पुच्छमिव किंचित् परिदृश्यते । अस्मदमावास्याया अपि तदा तदा पुच्छमुपलभ्यते ।

**चन्द्रपालः**— तथैव षट्संख्यानिर्दिष्टो भागः वृन्तपुच्छमिति कथ्यते ।

**यज्ञशर्मा**— अग्रे सूक्ष्माणि पत्राकाराणि अतिमृदुलानि संरक्तानि कानिचित् दृश्यन्ते, पल्लवानीति तर्कयामि ।

चन्द्रपालः— आम्, पल्लवान्येव ।

यज्ञशर्मा— कुत एतानि पर्वपुच्छानि केषुचिदेव पर्वसु दृश्यन्ते ।

चन्द्रपालः— एतानि पल्लवानि शाखानां प्रथमे वयसि अधोभागेषु प्ररोहन्ति । क्रमेण तरुणतामापन्नासु तासु स्वयमेव पतितान्यदर्शनं यान्ति ।

यज्ञशर्मा— परमस्य मूलभागः प्रच्छायशीतलो न भवति ।

चन्द्रपालः— पत्राणां विरलत्वात् छाया न सुस्निग्धा भवति । एवमेव धत्तूरवार्ताकादयोऽपि अनेकेष्वंशेषु द्रुमस्यास्य सादृश्यमावहन्ति ।

यज्ञशर्मा— सखे, कुतोऽत्र अधोभागे पत्राणि संकुचितानि? उपरि तु न तथा ।

चन्द्रपालः— उपरि वातस्य निरर्गलसंचारेण पत्राणि सम्यक् परिपुष्टानि । अधोभागे तु तस्य प्रतिबन्धात् न तावान् परिपोषः ।

यज्ञशर्मा— अद्य स्मरामि । न केवलं वातस्य, रविकिरणानामपि ऊर्ध्वभाग एव पुष्कलः संपर्कः ।

चन्द्रपालः— अत एवेमाः पटोलिकानिष्पावादयो वीरुधः छायासंछन्नप्रदेशे समुत्पन्ना अपि सुदूरमन्तरमतिक्रम्य सूर्यकिरणवातादिपौष्कल्ययुक्ते स्थल एव समेधमाना दृश्यन्ते ।

यज्ञशर्मा— केचन पनसादिवृक्षा अपि उन्नतेन प्रकाण्डेन समुपेता अभ्रंलिहा भूत्वा आत्मनः परिपोषायाजस्रं सूर्योपास्तिमनुतिष्ठन्ति । ब्राह्मणास्त्वद्य सन्ध्यास्वप्यादित्यं नोपतिष्ठन्ते ।

[ इति निष्क्रान्तौ ।

# सुलोचना ।

अथ निमेषमात्रेणैव मानसारेष्वग्रेसरस्य महेन्द्रशत्रोः भुजदण्डः, अपांसुलाललामभूतायाः सुलोचनायाः तामतिपरुषाम्, अश्रुतचरीं, श्रुतमात्रामेव अरुन्तुदमिव शल्यं हृदयं दलयन्तीं वाचं श्रुत्वा, प्रचण्डतरेण रयेण अवनीतलादुत्पत्य विद्युत्पुञ्जविनिर्मितमिव भ्राजमानं तं कृपाणमधोमुखीकृत्य, अतिनिशितेन तदग्रभागेन "अयि सुलोचने, मार्जय प्रथमं तव लोचने; वाचय मम वृत्तान्तं; इदं लिख्यते; सखि प्रियवादिनि उक्तं किल त्वया मतिमत्या 'विरम विरमास्मादनर्थावहादायासात्' इति। हितैषिण्याः तवोपदेशजातं दूरतः परित्यज्य, रणकर्मण्येव जातनिश्चयः निकुम्भिलायामभिचारेण विधिना हुतात् हुताशनात् सकलास्त्रशस्त्रकुलसङ्कुलं मायानिर्मितं रथमवाप्य योद्धुकामोऽहं यावत् तत्र गत्वा आशुशुक्षणिमाशु ज्वलयन्, लाजैस्तिलैः समद्भिः कुशैराज्येन च हुत्वान्ततो महाजस्य मेदसा पूर्णाहुतिं दातुमयते, तावदेव मत्पितृव्यनिवेदितसकलवृत्तान्तेन सीताकान्तेन मद्वधाय प्रेषितो लक्ष्मणः तत्र सत्वरमुपेत्यातिकठिनशिलावर्षादप्यधिकतरमाशीविषविषज्वालामुत्किरतामाशुगानां वर्षं मयि ववर्ष।

तदानीमपि होमैकव्यग्रमानसेन यथाकथंचित् होमं समाप्यैवानेन युध्येय इति स्थिरचित्तेन मया प्रस्नुताज्यधारासंयुतं महाजस्य मेदो हस्तेनोद्धृतम्। यदि परिसमाप्यते इयमाभिचारेष्टिस्तर्हि

न कदाप्यहं हन्तुं शक्य इति ज्ञात्वासौ सौमित्रिस्त्वरिततरमुपक्र-म्यातिजवोद्धृतपादतलाहत्या तद्भविः मद्धस्ताद्दूरतश्चिक्षेप । सद्य एव समुद्दीपितकोपाग्निरहं पुनरपि होमारम्भो मोहारम्भ इति निश्चित्य, मत्कोपहुताशने त्वां होष्यामीति तेन सह योध्दुमारभे । तस्मिन् समरसंरम्भे प्रदीप्तकोपयोरावयोः शस्त्राशस्त्रि, दण्डादण्डि, केशाकेशि च चिरकालं जन्यमजनि । अतिमायाविनं, त्रिभुवनैकवीरं मां हन्तुमशक्नुवन् लक्ष्मणः कमपि कालानलोपमं बाणं धनुषि संधाय, 'धर्मात्मा सत्यसंधश्च रामो दाशरथिर्यदि । पौरुषे चाप्रतिद्वन्द्वः शरैनं जहि रावणिम् ॥' इति सप्रतिज्ञं मयि मुमोच। बाणासननिर्मुक्तः सोऽपि रामबाणः क्रूरतरक्रेङ्कारमारचयन् विषधर-विषोपमामग्निज्वालामुद्गिरन् अशनिनिपातं मयि निपत्य मम शिरः छित्वा श्रीरामचरणारविन्दमूले, इमं दक्षिणं बाहुं निकृत्य त्वदन्तिके च न्यपातयत्। बाणावलूनं मच्छिरो निशिचरकुलधूमकेतोर्दिनकरकु-लचूडामणेः श्रीरामभद्रस्य चरणसरोजसेवासुखमनुभवन्नमन्दमानन्दं विन्दति । अयि मनस्विनि, शीघ्रमागम्यताम्; अनुभूयतां श्री-रघुपतिचरणसेवासौख्यम्; सफलीक्रियतां जन्म त्वयाऽपि । वर-णसमये सप्रणयं परिगृहीतं मम वामेतरं हस्तमादाय शीघ्रमाग-म्यताम्" इति महीतले विलिख्य, पुनरपि सुलोचनायाः पुरस्तात् भूमौ पपात ।

तथा लिखितं स्वनायकचरितं सभक्त्युन्मेषं वाचयित्वा, रोमाञ्चकञ्चुकिततनुलता, अनवरतरुदितोच्छूननयना सा सुलो-चना, शून्येव, मूर्छितेव, लिखितेव, स्तम्भितेव, चिरमस्तमितसक-लेन्द्रियव्यापारा तस्थौ । सर्वोऽपि तस्याः सखीजनः, अतिविस्माप-

कमभूतपूर्वमिदं निरीक्ष्य सतीमणेस्तस्या अनितरसाधारणं पातिव्रत्यं प्रशशंस ।

अथैषा मुहूर्तादिवोन्मील्य लोचने 'इतो न कालविलम्बः कार्यः; यथानियोगमाचरितव्यम्; अद्यैव मे श्वशुरसमीपमुपेत्य, निकुम्भिलायां मृतस्य मे पत्युः शिरस आनयनं प्रार्थयेयम्; तदानयत शिबिकाम्; आरोपयत चेमं बाहुदण्डम्; शीघ्रं गच्छामो यत्र मे श्वशुरो वर्तते' इति व्याहरन्ती शिबिकानयनाय सखीजनं समादिदेश ।

तत्क्षणमेव समाहृतायां मणिमयशिबिकायां सबहुमानमारोप्य तं बाहुदण्डं, चतसृभिः परिचारिकाभिः संवाहयन्ती तां शिबिकां, सखीजनपरिवृता, आप्रपदीनेन कञ्चुकेन समावृतशरीरा, निश्वासानलमलिनितदन्तच्छदा, निरर्गलगलन्नेत्राम्बुपूरसिक्तोत्तरीयांशुका, यमुनाप्रवाहवदतिनीलामंसविस्रंसिनीमाकुलाकुलामलकावलीं वहन्ती, असकृदुरस्ताडनाताम्रपाणिपल्लवा, आमलकीस्थूलमुक्ताफलविनिर्मितहारलतैकभूषणा, 'हा! नाथ' इत्यसकृत् विलपन्ती, पाणितलसमावृतमुखकमला, केनचित् कमलपलाशविधृतजलेन, केनचिदार्द्रकदलीदलव्यजनधारिणा, केनचिदुपरिपतच्चण्डचण्डकरकरपरिजिहीर्षासमुद्धृतशोकसमयसमुचितसितेतरातपत्रेण, शोकविकलेन, मूकेन, विरलविरलेन परिजनेन परिवृता, अतिभूमिं गतेनात्मनः शोकेन सकलजनहृदयं विदलयन्ती, साक्षादिव करुणाधिदेवता, मूर्तिमतीव पातिव्रती पतिविरहशोकविह्वला, मूकेव, मूढेव, उन्मत्तेव ग्रहग्रस्तेव, शून्यान्तःकरणेव, शोकार्णवनिमग्नेव, प्रस्खलन्ती पदे पदे 'यः कोऽपि स्वनायकवृत्तान्तमाहरेत्'

इति किरन्ती नवनीलनलिनरमणीयां द्राघीयसीमितस्ततो द्राष्ट्रिम्, 'अथ कियद्दूरे वर्तते मे श्वशुरस्यास्थानमण्डपिका' इत्यनुक्षणमापृच्छन्ती सखीजनं, क्षणमतिकरुणं विलपन्ती, क्षणमतिदीर्घं निश्वसती कथंकथञ्चित् सखीजनेन नीयमाना निशाचरचक्रवर्तिनो लङ्केश्वरस्यास्थानमण्डपिकासमीपमाजगाम ।

तत्र च तप्तकाञ्चनविनिर्मितस्य सभामण्डपस्य मध्ये, नवरत्नखचितसिंहासने समुपविष्टो रावणः, नातिदूरस्थिते कस्मिंश्चिदासने समुपविष्टया, सतीललामया मन्दोदर्या निसर्गरमणीयैः, विनयान्वितैः, नैकविधैरुपदेशैर्वार्यमाणोऽपि जनकतनयासक्तचित्तः 'अयि मुग्धे मन्दोदरि, कथमेवमुच्यते त्वया? मुच्येतापि प्राणावलिः; न कदापि जानकी; वीराग्रेसरोऽस्माकं पुत्रो निकुम्भिलायां यथाविधिहुतहुताशनसमुपलब्धदिव्यवाहनो रणे रामलक्ष्मणौ नियतं निहन्यात्; अनन्तरमनन्यरक्षणा मरणात्त्रस्यन्ती सा रमणीमणिर्जानकी स्वयमेवागत्य मामानन्दयिष्यति; पूरयिष्यति च मनोरथम्' इत्यवोचत् ।

कर्णारुन्तुदं तद्वचनं निशम्य मन्दोदरी, "नाथ, नायं धर्मस्तव महेश्वराभिनन्दितभुजबलस्य; सतीकुलचूडारत्नं हि जनकतनया; दवदहनसदृशं पातिव्रत्यम्; अत्यद्भुतमसाधारणञ्च सतीनां चरितम्; पश्य, परश्शतं वीराः रणे मृताः; यदि दशरथतनयौ मानुषौ, यदि च जनककुलनन्दिनी सामान्या काचन ललना, तर्हि कथमेतत्सर्वं संभवेत्? तस्मात् सर्वभूतहितकाम्यया समागतं नारायणं जानीहि लोकाभिरामं रामम्; त्रिलोकजननीं जलधितनयां च जनकतनयाम्। यस्या 'आकृतिरेवानुमापयत्यमानुषताम्'; सविनयं

समर्प्यतां सीता रामचन्द्राय ; कथमुद्युङ्क्ते ते चेतस्तत्तदाशङ्कितुं निजपातिव्रत्ययशोधवलीकृतदशदिशायां विदेहकुलमङ्गलदीपिकायाम् ? 'सैषा ते मतिर्न कल्याणी, न कदापि सुखावहा'; कल्याणाभिनिवेशी हि पुमान् सर्वेष्वपि कार्येषु भाविनमर्थमनर्थं वा सूक्ष्मया दृष्ट्यावगच्छति । इदमत्र निदर्शनम् । अतिबलशालिनः कति कति वा वीराः समरमुखे न निहताः ? असह्यविक्रमस्तव कनीयान् भ्राता चतुरङ्गबलान्वितश्चतुरं युध्यमानोऽपि तिरश्चां साहाय्यमुपगतेन रामेण रणे हतः । कुमारो मेघनादः प्रथमं परां पराभूतिमनुभूय जानकीमोचनाय त्वां बहुशः प्रार्थयन्नपि, तव परुषवाग्जालमसहमानः प्राणानपि तृणाय मत्वा रणाय पुनरपि प्राद्रवत् । न जाने भूयोप्यायुष्मन्तं तं द्रक्ष्यामि न वेति । यद्यद्यापि न शक्नोषि कुपथगामिनीं मतिं निवर्तयितुं, तर्हि नियतमस्मत्कुलं समूलं नश्येत् । तद्विरमास्मादनर्थावहादभिनिवेशात् । विशालमिदमतिरमणीयं राज्यम् ; प्राज्यमनन्यसाधारणं चैश्वर्यम् ; विनीता बहवश्चानुचराः ; सुरपतिशिखामणिप्रणयिनी चाज्ञा ; दिगन्तविश्रान्ता कीर्तिः ; सर्वजनविस्मापकं चरितम् ; 'सर्वमेकपद एव मा कृथा वृथा ;' सत्वरं समर्प्यतां जानकी ; संपाद्यतां दशरथसुतमैत्री ; चिरमुपभुज्यतां राज्यलक्ष्मीः" इति सादरमगादीत् ।

स्वीयं चेष्टितमनुचितमिति जानन्नपि रावणः कालवशात् सादरप्रोक्तान्यपि मन्दोदरीवचांस्यवधीरयामास ।

अहह ! महान् हि कालातिपातः संवृत्तोऽस्माकमास्थानमण्डपिकासमीपमागतां सुलोचनां विस्मृतवताम् ? कियन्तं कालं तिष्ठतु सा तपस्विनी तत्र ? अतस्तामन्तः प्रवेश्य, 'ततः किं भविता'

इति ज्ञातुमत्युत्सुका वयमपि प्रवेक्ष्यामः ।

नवजलधरनीलेन चिकुरचयेन, शरदिन्दुबिम्बसुन्दरेण वदनेन, बालकलानिधिकोमलेन निटिलेन, धनुर्लतासंशयमुत्पादयता भ्रूयुगलेन, चलत्कुवलयदलस्निग्धेन लोचनद्वयेन, चम्पककलिकाशङ्कामुपजनयता नासावंशेन, मुकुरसमेन कपोलेन, विद्रुमलतामधुरेणाधरेण, कम्बुसदृशेन कण्ठेन, कन्दुकसुन्दरेण वक्षोजयुगलेन, लतासाम्यमधिगच्छता भुजेन, वलित्रयमनोहरेण मध्येन, पुलिनतलानुकारिणा नितम्बेन, कदलीकाण्डपेशलेनोरुयुगलेन, सरसिजसदृशेन पादद्वयेन च विराजमाना, राजहंसीव गमने, कोकिलवधूरिवालापे, कोककामिनीव पतिप्रेम्णि, मन्त्रसिद्धिरिव सर्वजनवशीकरणे, रमणीयेनाकृतिविशेषेण, निरुपमेन लावण्येन, मधुरया वाचा, परमेणौदार्येण, स्वतःसिद्धेन सौशील्येन, महनीयेन पातिव्रत्येन-- किं बहुना ? सर्वेणापि प्रकारेण जानकीमनुकुर्वती सुलोचना मन्दमास्थानमण्डपिकाद्वारमतीत्य रावणस्य सभां प्रविवेश ।

निरीक्ष्य तपस्विनीं तां रावणो मन्दोदरीमब्रवीत् 'अयि मुग्धे मन्दोदरि, सर्वथानभिज्ञासि त्वम्; न विचारयसि कार्याकार्यगौरवम्; न तत्त्वतो जानासि मेघनादस्य बलम्; पश्य पश्य, वीराग्रगण्येन मत्पुत्रेण रणे रामलक्ष्मणौ निहतौ श्रुत्वा मत्प्रसादं संपादयितुमित एवागच्छति जानकी; अद्य फलितं मे मनोरथेन; अद्यैव कृतकृत्यमिवात्मानं पश्यामि' इति ।

तथागच्छन्तीं वनितां दृष्ट्वा मन्दोदरी च जानकीति किञ्चिदिव बभ्राम । एतस्मिन्नन्तरे समीपमागता सुलोचना । रावणस्तदापि तां जानकीत्येव निश्चिकाय । मन्दोदरी तु सम्यक् निर्वर्ण्य

तां वनितां, स्ववधूं ज्ञात्वा, 'पौलस्त्य, न सम्यक् जानासि त्वमेतां वनिताम्? नेयं जनकतनया। एषा ह्यस्मद्वधू: कुमारस्य मेघनादस्य प्रेयसी निजसौन्दर्येण जानकीमनुकरोति! 'असूर्यम्पश्या हि राजदारा:' शुद्धान्त एव स्थिता कथमत्रागच्छति? निपुणं निरूप्यमाणे शोकोपहतचेतनेव दृश्यते। अनादृतशरीरसंस्कारेयं वरवर्णिनी। तथाहि। न दृश्यते फालतले तिलकम्। उत्सृष्टा वेणी। म्लानं मुखकमलम्। बाष्पप्रसरदूषितं नयनयुगलम्। शोकविह्वला गात्रयष्टि:। न जाने किमत्याहितमिति। न कदाप्येषा अन्त:पुरात् बहिर्निर्गच्छति। एवंविधेन वेषेणात्रागतामेनां दृष्ट्वा युद्धाय गतं मे तनयं प्रति अमङ्गलमाशङ्कते प्रेमपरवशं मन:। आ:! किं करोमि? कीदृशीं वार्तामाहरिष्यत्येषा तपस्विनी' इति व्याहार्षीत्।

(क्रमश:)

# उपदेशसूक्तिमाला।

विद्यया हि मनुष्यजाति: तिर्यग्जातिभ्यो व्यावर्त्यते। जीवनहेतौ प्रवृत्त्या अपायहेतो: निवृत्त्या च तिरश्चोऽपि शरीररक्षां संपादयन्ति। 'पश्वादिभिश्चाविशेषात्' इति विद्याहीनं सूरयो निन्दन्ति। विद्यया पुरुषस्यात्मा आनन्दभरित: संपद्यते। विद्यया विमलां कीर्तिं पुरुषोऽश्नुते। यस्य पुरुषस्य विद्या प्रशस्ता वर्तते तं श्री: स्वयमेव वृणुते। देशान्तरे वर्तमाना अपि पुरुषा: तस्य बन्धवो भवन्ति। अत: सर्वप्रयत्नेन पुरुषेण विद्या आर्जयितव्या। अवरव-

र्णात् पुरुषादपि शुभोदर्कां विद्यां श्रद्धया परिगृह्णीयात् । रत्नस्य क्रेतारः रत्नस्य गुणमेवापेक्षन्ते, न तु विक्रेतुर्वणिजो विशेषम् । तद्वत् विद्याया ग्रहणेऽपि विद्योपदेष्टुर्गुरोः परावरवर्णता न निमित्तं भवितुमर्हति । शृणु मनुष्याणां पितुर्मनोर्निदेशम् 'स्त्रियो रत्नान्यथो विद्या धर्मः शौचं सुभाषितम् । विविधानि च शिल्पानि समादेयानि सर्वतः ॥' 'श्रद्दधानः शुभां विद्यामाददीतावरादपि' इति; परं तु 'विद्या ह्यद्यापि सावद्या विना विनयसंपदा' इति च । 'विनयेनान्विता विद्या सतां संमानमर्हति । तेन हीना हि सा त्याज्या फणामणिरिवानिशम् ॥' भर्तृहरिः विद्याविहीनं वक्रोक्त्या एवं विगर्हते 'विद्वानेव विजानाति विद्वज्जनपरिश्रमम् । न हि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ॥' अतो विद्वान्विनीतश्च भवेत् ॥ १८ ॥

शब्दो द्विविधः— ध्वन्यात्मको वर्णात्मकश्च । अत्र द्वितीयो मनुष्याणामेव न तिरश्चाम् । वर्णा इत्थमुत्पद्यन्ते— यदा पुरुषो वक्तुं वाञ्छति तदा तस्य मनः कायाग्निं वैश्वानराख्यमाहन्ति । स मारुतं प्रेरयति । स प्राणरूपो मारुतः हृदयस्य कण्ठस्य च पथा ऊर्ध्वं प्रसरन् मूर्धानं गच्छति । तदा मूर्ध्न्यभिहतः सन् प्रत्यावृत्य कण्ठताल्वादिषु वर्णानामुत्पत्तिस्थानेषु व्याप्नोति । अथ वर्णा उत्पद्यन्ते । ये संमिलिताः पदानि संपद्यन्ते पदानि च वाक्यानीति । एवं भगवता पाणिना उपदिश्यते ॥ १९ ॥

'नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचे' इति वेदमन्त्रः । वाक् द्विविधा पौरुषेयी, अपौरुषेयी चेति । पुरुषैः प्रोच्यमाना नानाविधभाषारूपा प्रथमा । पुरुषैरप्रणीता पृथिव्याद्यर्थजातमिव सर्गादावीश्वरेण प्रणीता वेदात्मिका वाक् द्वितीया ।

वाचो हि महिम्ना सर्वाणि श्रेयांसि अस्माभिः प्राप्यन्ते इह लोके अमुत्र च । एवं मूर्तिद्वयवतीं वाचोऽधिष्ठात्रीं स्रष्टुः प्राणनायिकामार्याः प्रणमन्ति इति मन्त्र आह । इदं च प्रणमनं जगत्स्रष्ट्रा ईश्वरेण शब्दं द्वारीकृत्यास्माकं हितप्राप्त्युपायस्य प्रदर्शनात् तद्विषये कृतज्ञतामभिव्यनक्ति ईश्वरं प्रति इति सूरयो मन्यन्ते ॥ २० ॥

वर्णा अचो हलश्चेति द्विधा विभक्ता भवन्ति । तत्राचः स्वरा इति गद्यन्ते । स्वराः पुनः त्रिविधाः— उदात्ता अनुदात्ताः स्वरिताश्चेति । अमी स्वरा वेदे नियमेनोपयुज्यन्ते । लोकशब्देषु स्वरनियमं न पश्यामः । वेदेऽपि मन्त्राणामध्ययनकाल एव विविच्योच्चार्यन्ते उदात्तादयः । मन्त्रबोध्यानां देवतानां शंसनवेलायां एकया श्रुत्या मन्त्राः पठ्यन्ते, यस्यां श्रुत्यां उदात्तानुदात्तस्वरिता एकीभवन्ति ॥२१॥

प्रवर्तते हि चेतनः तस्मिन् कर्मणि, यत्रेदं कर्म ममाभिलषितं साधयिष्यतीति बुद्धिस्तस्योदेति । अतो जानीमः पुरुषस्य प्रवृत्तिमात्रे प्रवृत्त्युद्देश्यस्यार्थस्य इष्टसाधनताज्ञानं कारणमिति, तादृशस्य ज्ञानस्यानुदये पुरुषप्रवृत्तेरदर्शनात् । अथ क्वचित्कर्मणि इदं मम इष्टं साधयिष्यतीति जानन्नपि न प्रवर्तते; यथा फणिनः फणायां महार्घमुज्ज्वलदीप्तिकं मणिं पश्यन् पुरुषः आजिहीर्षुरपि तदाहरणे न प्रवर्तते, यथा च क्षुधया पीड्यमानः पुरुषः विषमिश्रमन्नं क्षुधायाः शान्तिक्षमं जानन्नपि तद्भोक्तुं न प्रवर्तते ; तत्कस्य हेतोः ? अपेक्षितं हि द्रव्यं महतापायेनानुसृष्टमिति जानाति । अतस्तत्र पुरुषो न प्रवर्तते । अथ किमायातम्; इष्टसाधनं वस्तु बलवतानिष्टेन यदि नानुसृष्टं इति जानीयात्, तर्हि तत्र पुरुषः प्रवर्तते । अन्यथा तु न प्रवर्तत इति ॥ २२ ॥

(क्रमशः)

मनोवाक्कायैरनादिकालप्रवृत्तानन्ताकृत्यकरणकृत्याकरणभग-

---

अथोत्तरखण्डस्थस्यापि सविशेषणनारायणशब्दस्य पूर्वमेव व्याख्यातत्वात्, अवशिष्टयोश्च चतुर्थीनमसोः पाठक्रमादर्थक्रमस्य बलीयस्त्वात् प्रथमं मनोवाक्कायैरित्यादिभिस्त्रिभिर्वाक्यैरिष्टप्राप्तेः पूर्वभाविनीं ममकारनिवृत्तिवाचिनमःशब्दविवक्षितां सर्वानिष्टनिवृत्तिं प्रार्थयते । तत्र सर्वस्य चानिष्टस्वेष्टविघातस्य च कर्ममूलत्वात् तन्निवृत्तिः पूर्वमभ्यर्थ्यते । मानसादिभेदेन त्रिविधः पापराशिः, तद्विपाकश्च मन्वादिभिर्विभक्त इति ज्ञापनाय करणत्रयोपादानम् । अकृत्यकरणादेरहेतुकत्वमन्योन्याश्रयादिकं च परिहर्तुमाह– **अनादि कालप्रवृत्तेति** ॥ हितप्रवृत्तियोग्यैः करणैरेतावन्तं कालमहिते प्रवृत्तोऽस्मीति निर्वेदश्चात्र व्यञ्जितः । 'यद्ब्रह्मकल्प' इत्यादिप्रक्रियया अनादिकालप्रवृत्तम्, अत एवानन्तम् । प्रथमोऽनन्तशब्दोऽकृत्यकरणकृत्याकरणरूपसामान्यापचारयोरन्वेतव्यः । द्वितीयस्तु भगवदपचारादौ । अकृत्यकरणादिपञ्चकमुत्तरोत्तरं क्रूरतरम् । यद्यपि केषांचित् कृत्यानामकरणमकृत्यकरणात्मकम्, तथापि शरणागतरक्षणादिकृत्याकरणं महत्तरपातककोटौ स्मर्यत इति ज्ञापयितुमकृत्यकरणादुत्तरं कृत्याकरणोक्तिः । अकृत्यकरणान्तर्गतस्यापि भगवदपचारादेः ब्राह्मणपरिव्राजकन्यायेन प्रकृष्टत्वज्ञापनाय पृथगभिधानम् । यद्यप्यकृत्यकरणादेरप्याज्ञातिलङ्घनरूपतया भगवदपचारत्वम्; तच्चात्रापचारानिति विशेष्यनिर्देशेन व्यज्यते, तथापि शिशुपालादीनामिवाव्यवधानेन भगवत्परिवादादिकमिह भगवदपचारशब्दोक्तम् । अकृत्यकरणशब्देन तु स्ववर्णाश्रमादिनिषिद्धानुष्ठानमात्रम् । कृत्याकरणशब्देन स्ववर्णादिनियतधर्मस्य प्राप्तकाले शक्तेनाननुष्ठानम् । भगवदपचाराश्च द्वात्रिंशदपचारादिप्रकरणेषु द्रष्टव्याः । भगवदीयेषु वस्तुषु स्वीयत्वबुद्धिः, अर्चावतारपर्यन्तेष्ववतारेषु प्राकृतत्वबुद्धिः, इत्यादयोऽपि भगवदपचाराः । त्वदपचारेति वक्तव्येऽप्यत्र भगवदपचारशब्दस्तत्प्रमाणोपात्तप्रकारसूचनार्थः । अयथाशास्त्रमर्थाद्युपाधिभिर्भागवतविरुद्धाचरणमिह भागवतापचारः । इमौ विपर्यासेन केचित् व-

**वदपचारभागवतापचारासह्यापचाररूपनानाविधानन्तापचारान् आरब्धकार्यान्, अनारब्धकार्यान्, कृतान्, क्रियमाणान्, करिष्यमाणांश्च सर्वान् अशेषतः क्षमस्व ॥**

---

र्णयन्ति। एतयोरेवापचारवर्गयाः 'न क्षमामि' इत्यादिभिर्विशेषिताः केचित्पूर्वोक्तन्यायादसह्यापचारा इति विभज्यन्ते। ते च 'विद्याचोरो गुरुद्रोही' 'एकाक्षरप्रदातारम्' 'यः शूद्रं भगवद्भक्तम्' 'मयि द्वेषानुबन्धोऽभूत्' 'संस्तुतावुद्यते तव' इत्यादिषु द्रष्टव्याः ॥

एवं निर्निबन्धनभगवद्भागवतद्वेषावज्ञापरिहासादयश्च यथालोकमसह्यापचारा इत्यनुशिष्यन्ते। एते पञ्चापि प्रत्येकमवान्तरोपाधिभिः नानाविधाः। तत्तद्विधास्वपि अवान्तरव्यक्तिभेदैरनन्ताः। आरब्धकार्यान् जात्यायुर्भोगरूपविपाकसंज्ञफलप्रदाने प्रवृत्तान्। यद्यपि, 'अनारब्धकार्ये एव तु पूर्वे तदवधेः' इति उपासने सूत्रितम्, तथापि 'साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी' इति प्रवृत्तौ विशेषवचनादत्रारब्धकार्योपादानम्। आर्थितार्थप्रदस्य शरण्यस्य प्रपत्तॄणामार्तितारतम्यानुसारेण यथाप्रार्थितफलप्रदानात् तदिष्टदेहाद्यनुवृत्तौ न प्रत्यक्षादिविरोधः। अनारब्धकार्यान् प्रारब्धकार्यकर्मनिरुद्धावसरतया अनुपक्रान्तफलान्। द्विविधानपि कृतानित्यवच्छिनत्ति। क्रियमाणान् आनुकूल्यसंकल्पादिमत्त्वेऽपि देशकालादिवैगुण्यात् पूर्वनियुक्तदूरस्थदुर्निवारभृत्यादिमुखेन वा उपक्रान्तानपरिसमाप्तान्। करिष्यमाणान् तद्वदनुबन्ध्यादिमुखेनागत्या प्रमादाद्वा संपतिष्यतः, बुद्धिपूर्वोत्तराघानां पश्चादेव प्रायश्चित्तविधानात्। तेषामप्यत्र संग्रहे तु यथार्हप्रायश्चित्तप्रेरणं क्षमाफलं ग्राह्यम्। सर्वानशेषत इति व्यक्तिशक्तिकार्त्स्न्यपरम्। सन्ति हि पापानां बह्वयः शक्तयः तत्त्वतिरोधायकत्वम् प्रत्यवायजनकत्वम्, कर्मान्तरानर्हतापादकत्वम्, सजातीयपापारम्भरुचिजनकत्वं चेति। एतास्वन्तिमा वासनेत्युच्यते। स च प्रत्युत्तरे व्यक्तमनुवदिष्यते। पापशक्तिश्च निग्रहसंज्ञः परमपुरुषबुद्धिविशेष एवेति क्षमस्वेत्यनेन व्यज्यते। निग्रह-

**अनादिकालप्रवृत्तविपरीतज्ञानमात्मविषयं कृत्स्नजगद्विषयं च विपरीतवृत्तं चाशेषविषयमद्यापि वर्तमानं वर्तिष्यमाणं च सर्वं क्षमस्व ॥**

---

निवृत्तिरूपो हि प्रसादविशेष इह क्षमा । अत्र भागवतापचारेषु तद्विदितेषु तत्प्रसादनमुखेन भगवतः प्रसादनम् । 'मया त्वं परुषाण्युक्तस्तच्च त्वं क्षन्तुमर्हसि' इति न्यायात् । तदविदितेषु तु अव्यवधानेन, रहस्यप्रायश्चित्त न्यायात् ॥

एवं निषिद्धक्षमा प्रार्थिता । अथ सहेतुककाम्यक्षमा प्रार्थ्यते— **अनादिकालेति** ॥ क्षुद्रपुरुषार्थकामनाया विपरीतज्ञानसापेक्षतया अपचाराणामिव शास्त्रार्थज्ञानपूर्वककाम्यानामपि मात्रया भ्रान्तिहेतुत्वं व्यञ्जयितुमिह विशेषतो विपरीतज्ञानस्य सहोक्तिः । यथावस्थितविषयविरुद्धाकारावगाहिज्ञानमिह विपरीतज्ञानम् । तच्चात्र 'योऽन्यथा सन्तमात्मानम्' इत्यादिभिरुक्तः स्वात्मनो जगतश्च स्वनिष्ठत्वस्वतन्त्रत्वस्वशेषत्वभगवदन्यनिष्ठत्वादिभ्रम इत्यभिप्रायेणाह— **आत्मविषयं कृत्स्नजगद्विषयं चेति** ॥ वृत्तशब्दस्य शास्त्रीये प्रसिद्धिप्रकर्षमुपजीव्य विपरीतवृत्तमिति बन्धकं काम्यकर्मोच्यते ; अन्यथा पूर्वोक्तेन पुनरुक्तिप्रसङ्गात् । काम्यस्य च विपरीतवृत्तत्वं सात्त्विकत्यागसमदर्शित्वादिविशिष्टहिततमधर्मविपरीतत्वात् । विपरीतवृत्तेऽपि स्वविषयतया पुत्रादिपरविषयतया च वैविध्यं दर्शयति— **अशेषविषयमिति** ॥ **अद्यापि वर्तमानं वर्तिष्यमाणं च** सद्गुरूपदेशादिभिः परोक्षसम्यग्ज्ञानेऽपि बाधितानुवृत्त्यादिनयाद्वासनादिभिरनुवर्तमानमित्यर्थः । अत्र चकारेण पूर्वकृतविपरीतवृत्तसमुच्चयः । अद्यापीत्यनेन च अनादिविपरीतवृत्तसन्ततिः सूच्यते । अत्रापि सर्वशब्दः पूर्ववत् कार्त्स्न्यपरः । अशेषत इति चानुसन्धेयम् ॥

इह यथाधिकारं यथाबोधितमनुष्ठितानामपि संसारहेतुधर्माणामभिचाराणामिव अनर्थपर्यवसायितया मुमुक्ष्वपेक्षया पापत्वोक्तेः सर्गादिहेतुभूत-

**मदीयानादिकर्मप्रवाहप्रवृत्तां भगवत्स्वरूपतिरोधानकरीं**

---

स्वतन्त्रसंकल्पत्वेऽपि निग्रहविशेषत्वबुद्ध्या काम्यक्षमाप्रार्थनं युक्तम्। यद्यप्येवं पूर्वकृतेषु काम्येषु गतिः, तथापि वर्तमानवर्तिष्यमाणकाम्यक्षमार्थिनां स्वयं तत्तदारम्भ एव न संभवतीति कथं तत्क्षमाप्रार्थनम्? इत्थम्– अज्ञातयादृच्छिकसुकृतन्यायात् सुहृज्जनबुद्ध्या वा संभवत्सु नेदं चोद्यम्। स्वबुद्धिपूर्वमपि वर्तमानेषु काम्येषु मध्ये निर्विण्णानामपि प्रक्रान्तसमापनमन्तरा लब्धवृष्टेः कारीरीशेषसमापनन्यायेन स्यात्। तत्र पश्चिमांशस्याज्ञासिद्धत्वान्न काम्यत्वदोषः। पूर्वांशस्य तु क्षुद्रफलकामनामूलस्य तत्फलजनकत्वाभावेऽपि तादृशवासनाजनकत्वसंभवात् कर्मयोगस्येव 'नेहाभिक्रमनाशोऽस्ति' इति न्यायेन केषांचित्कर्मणामसमाप्तानां कृतांशस्य विलम्बकारिसाधनान्तरपर्यवसितफलजनकत्वात् तत्क्षान्तिः प्रार्थनीया। पूर्वापरांशयोरधिकारिभेदेऽप्यासमाप्तेरैककर्म्याद्वर्तमानव्यपदेशोऽपि युक्तः। उत्तरकालेऽपि केनचिद्धेतुना निर्वेदविच्छेदात् नित्यत्वभ्रमात् स्वप्नदोषाद्वा काम्यं संभाव्यते। तस्यानुत्पन्नस्यापि क्षमावेक्षणं शीघ्रं स्वोचितप्रायश्चित्तप्रेरणार्थम्, सौभर्यादिन्यायेन क्रमेण वैराग्यजननार्थं वा। उक्तं हि प्रपन्नमधिकृत्यैव— 'अथोपायप्रसक्तोऽपि भुक्त्वा भोगाननामयान्। अन्ते विरक्तिमासाद्य विशते वैष्णवं पदम्' इति ॥

एवं कर्मनिवृत्तिः प्रार्थिता। अथ कर्महेतुप्रकृतिसंबन्धनिवृत्तिः कर्मनिवृत्त्यैव भवन्त्यपि सर्वेश्वरबुद्धिविशेषाधीनेति ज्ञापयितुमभ्यर्थ्यते— **मदीयेति** ॥ ईश्वरस्य वैषम्यनैर्घृण्यपरिहारार्थं मदीयेत्युक्तम्। अन्योन्याश्रयनिवारणाय बीजाङ्कुरन्यायमभिप्रेत्याह– **अनादिकर्मप्रवाहप्रवृत्तामिति**॥ प्रकृतिस्वरूपस्य पुरुषवत् अनादित्वात् तत्प्रवृत्तिमात्रे कर्महेतुकत्वमुक्तम्। तत्र च 'गुणमायासमावृतः' इत्यादिप्रसिद्धं प्रतिकूलप्रवृत्तित्रयं भगवत्स्वरूपेत्यादिभिराह— **भगवत्स्वरूपेति** ॥ तिरोधानं नाम क्षेत्रज्ञानां भगवत्स्वरूपविषयज्ञानप्रसरनिरोधः। तथा चात्यन्ततिरोधानादसत्त्वबुद्धिं सामान्यतो विदितेऽपि भगवति सर्वाश्रयत्वादिधर्मतिरोधानादवरत्वादिबुद्धिं तद-

**विपरीतज्ञानजननीं स्वविषयायाश्च भोग्यबुद्धेर्जननीं देहेन्द्रियत्वेन भोग्यत्वेन सूक्ष्मरूपेण चावस्थितां दैवीं गुणमयीं मायां दासभूत:**

---

न्येषु स्वनिष्ठत्वादिबुद्धिं च करोतीत्याह—**विपरीतज्ञानजननीमिति**—इदं च जीवस्वरूपतिरोधानतन्मूलदेहात्मभ्रमादेरुपलक्षणम् । एवं तत्त्वत्रयतिरोधानफलभूतं विपरीतज्ञानान्तरमाह—**स्वविषयाया इति**॥ प्रकाशमानेषु वस्तुषु तिरोधानं नाम तत्तद्भेदकधर्मग्रहणानिवारणम् । इदमेव हि सर्वत्र भ्रान्तेर्निदानम् । उक्तस्यापकारत्रयस्य हेतुभूतमवस्थाचतुष्टयं देहेत्यादिभिरुच्यते । देहेन्द्रियत्वेन भोगायतनतया भोगोपकरणतया च । भोग्यत्वेन शब्दादिगुणविशिष्टभूतपञ्चकरूपत्वेन । सूक्ष्मरूपेण देहादिपरिणामरहितांशेन । सेयं प्रकृतिरिदानीं चतुर्भिरप्यंशैरपकरोति । प्रलयदशायां तु सूक्ष्मरूपेणैव तिरोधानमात्रं करोतीति व्यवस्था 'देहयोगाद्वा सोऽपि' इति सूत्रभाष्ये द्रष्टव्या । ईदृश्याः प्रकृतेः दुरत्ययत्वं स्वतन्त्रलीलाप्रवृत्ततयेति 'देवी ह्येषा गुणमयी' इत्यादिना त्वयैव गीतामिति सूचयति—**दैवीमिति**॥ तिरोधानादिहेतुभूतैरवस्थाचतुष्टयानुवृत्तेर्बन्धहेतुभिः सत्त्वादिगुणैः प्रचुरतामाह—**गुणमयीमिति**॥ सत्त्वादिगुणसमुदाय एव प्रकृतिरिति सांख्यपक्षस्तु 'गुणाः प्रकृतिसंभवाः ।' 'प्रकृतेर्गुणसंमूढाः' इत्यादिव्यधिकरणप्रयोगबलात् निरस्तः । क्वचित्तु सत्त्वरजस्तमःशब्दानां द्रव्यपर्यन्तः प्रयोगः 'तद्गुणसारत्वात्तु तद्व्यपदेशः' इति न्यायेन नेतव्यः । एवमनन्तैर्विभागैर्व्यापारैः परिणामैर्गुणैश्च प्रख्यातमाश्चर्यत्वं समाख्याविशेषेणाह—**मायामिति**॥ मायां मां तारयेति द्विकर्मकतयान्वयः । दासभूत इत्यादिभिर्मूलमन्त्रपदत्रयार्थः सूच्यते । 'दासभूताः स्वतः सर्वे' 'आत्मदास्यं हरेः स्वाम्यम्' इत्यादिप्रसिद्धं स्वभावतो दासत्वं च्विप्रत्ययाभावेन व्यज्यते । द्वयेऽपि नारशब्दवाच्यानां जीवानां तात्पर्यवृत्त्या दासत्वं ग्राह्यम् । दूरं पलायितेऽपि मयि त्वत्संबन्धस्तावत् दुस्त्यजः । दास्यप्रतिबोधश्च मे संप्रति जात इति भावः । 'शरणागतोऽस्मि तवास्मि दासः' इति पूर्वोत्तरखण्डार्थनिष्ठत्वं समुचित्योक्तम् । स्वरूपभरलाभेषु तवैव

**शरणागतोऽस्मि तवास्मि दास इति वक्तारं मां तारय ॥**

**"तेषां ज्ञानी नित्ययुक्तः एकभक्तिर्विशिष्यते ।**
**प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥**

---

न ममेति यत्। प्रपन्नस्यानुसन्धानं सारं तदिह दर्शितम् ॥ अस्मीति प्रार्थनाभिप्रायम्। **दासोऽस्मि** दासवृत्तिपरः स्यामित्यर्थः । अन्यथा तु दासभूत इत्युक्तस्यैव पुनर्वचनमात्रं स्यात् । शरणागतोऽस्मि तवास्मि दासः इति निर्देशौ प्रार्थनात्मनिक्षेपपराविति केचित् । आर्तो वा दृप्तो वा द्वयवक्ताऽहं तव दयनीय इत्यभिप्रायेणाह-- **इति वक्तारमिति** ॥ यद्यप्यत्र फलप्रार्थनार्थं प्रपत्तिकर्तृत्वानुवाद एव युक्तः, तथापि तद्वचनकर्तृत्वानुवादो 'भव शरणमितीरयन्ति' इत्याद्यभिप्रेतवचनप्राशस्त्यादिव्यञ्जनार्थः । माम् 'स्वयं मृत्पिण्डभूतस्य' इत्यादिप्रसिद्धस्वरक्षणासमर्थम् । त्रिगुणद्रव्यस्य नित्यतया नाशाभावात् तारयेत्युक्तम् । एतेन, 'दुरत्यया' इत्युक्तं स्वयत्नेन दुस्तरत्वं 'मामेव ये प्रपद्यन्ते' इत्यादिनाभिप्रेतं पराधीनतरणं च गम्यते । एवं नमःशब्दे निवर्तनीयतयाभिप्रेतस्य पापस्य भ्रमस्य प्रकृतिसंबन्धस्य च मिथःकार्यत्वं कारणत्वं च यथायोगं द्रष्टव्यम् ॥

अथ निर्वेदमान्द्यादीषद्विलम्बक्षमाणामत्रत्यविशदज्ञानभक्त्योरपि कैङ्कर्योपयोगितया चतुर्थ्यभिप्रेतफलकोटिघटितत्वात् स्वयंप्रयोजनं तदुभयं तेषामित्यादिना प्रार्थ्यते । 'तत्पादभक्तिज्ञानाभ्यां फलमन्यत् कदाचन । न याचेत् पुरुषो विष्णुं याचनान्नश्यति ध्रुवम्' इति तावन्मात्रप्रार्थना ह्यनुज्ञाता । अत्र परभक्तिवचनं तदनन्तरभाविपरज्ञानपरमभक्त्योरप्युपलक्षणम् । तच्च प्रतिवचनभागे व्यञ्जयिष्यते। **ज्ञानी** 'प्रकृतिं विद्धि मे पराम्' इत्यादिप्रतिपादितभगवच्छेषतैकरसात्मस्वरूपवित् भगवन्तमेव परमप्राप्यं मन्वानः । **नित्ययुक्तः** ऐश्वर्याद्यर्थिनां स्वाभिलषितप्राप्तौ सिद्धायां भगवता योगो निवर्तते, ज्ञानिनस्तु न तथेति भावः । **एकभक्तिः** न तु प्रयोजनान्तरविभक्तभक्तिरित्यर्थः । एतदुभयं ज्ञानी विशिष्यत इत्यस्य हेतुः ।

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥"

इति श्लोकत्रयोदितज्ञानिनं मां कुरुष्व ॥

---

अत्यर्थम् अत्यभिधेयम्; सर्वज्ञेन सर्वशक्तिना मयापि दुर्वचमिति भावः । 'स च मम प्रियः' इत्यत्राप्यत्यर्थमित्येतदनुषज्यते । यद्वा स्वप्रत्यिपेक्षया स्वभक्तप्रीतेः प्रकर्षोक्त्या स्तुतिः । **आत्मैव** सर्वान्तरात्मनो ममाप्यन्तरात्मैव । नन्विदं प्रमाणविरुद्धामित्यत्राह—**मे मतमिति** ॥ प्रकृष्टप्रीतिविषयत्वेनातिवादान्न विरोधः । तथात्वादरहेतुमाह— **आस्थित इति** ॥ युक्तात्मा मद्विरहस्यातिदुःसहतया मयि नित्ययोगप्रवृत्तमनाः । **अनुत्तमां गतिम्** परमप्राप्यम् । **जन्मनाम्** पुण्यजन्मनाम् । **ज्ञानवान्** पूर्वोक्तज्ञानवान् । वासुदेवः सर्वमिति प्रपद्यत इत्यन्वयः । **सर्वम्** प्राप्यप्रापकादि । 'रामस्य व्यवसायज्ञः' इत्यादिनिदर्शितज्ञानविशेषवत्त्वात् महात्मत्वोक्तिः । 'महामनाः' इति भाष्यम् । **सुदुर्लभः** मत्तः प्रयोजनान्तरार्थिन आर्तादयोऽपि दुर्लभाः । अयं तु कर्मवश्यमध्ये भक्तलाभार्थिना मया देशिकार्थिभिश्चान्यैः सुदुर्लभः, लब्धश्चेदयमलभ्यलाभ इति भावः । उक्तं हि श्रीपौष्करे 'दुर्लभा भगवद्योगभाविनो भुवि मानवाः । तद्दर्शनात्तदालापात्सुलभं शाश्वतं पदम्' इति । **माम्** 'अज्ञो जन्तुरनीशोऽयम्' इत्युक्तेषु मूर्धाभिषिक्तम् । **श्लोकत्रयोदितज्ञानिनं कुरुष्व** क्रियाफलं त्वद्गामीत्यात्मनेपदेन व्यज्यते । अव्यवहितत्वादिह श्लोकत्रयेत्युक्तम् । परभक्तिश्लोकानां भिन्नप्रकरणस्थतया स्थानत्रयेत्युक्तम् । **माम्** 'या प्रीतिरविवेकानाम्' इत्युक्तेषु बाह्यविषयसक्तेष्वग्रगण्यम् ॥

'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया' 'भक्त्या त्वनन्यया शक्यः' 'मद्भक्तिं लभते पराम्' इति स्थानत्रयोदित-परभक्तियुक्तं मां कुरुष्व। परभक्तिपरज्ञानपरमभक्त्येकस्वभावं मां कुरुष्व। परभक्तिपरज्ञानपरमभक्तिकृतपरिपूर्णानवरतनित्यविशदत-मानन्यप्रयोजनानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशे-षतैकरतिरूपनित्यकिङ्करो भवानि ॥

---

अथ शरीरपातसमयभाविनो बुध्याकारानभ्यर्थयते— **परभक्तीति**। अथवा मुक्तिदशाभाविनां परभक्त्यादीनामिदमपेक्षणम्। एकस्वभावत्वो-क्तिर्हि अत्रत्यपरभक्त्यादिव्यवच्छेदार्था। उक्तानामेव तत्रत्यपरभक्त्यादीनां सादरानुवादेन कैङ्कर्यपर्यन्ततां याचते— **परेति**। अत्र त्वदिति वक्तव्ये भगवच्छब्दः अनुभाव्यपौष्कल्यस्फुटीकरणार्थः। किंकरविशेषणे शेषतैकर-तिरूपशब्दे शेषतैकरतिरेव रूपं निरूपकं यस्येति भाव्यम्। भवानीति प्रार्थना। त्वत्किङ्करभावात्पूर्वमसत्कल्पोऽहमिति च सूच्यते। एवं द्वयार्थो व्याख्यातः ॥

सर्वज्ञेऽपि स्वतो देवे याच्ञाविज्ञापनादिभिः।
तत्तदिष्टप्रदित्सात्मा प्रीतिरेव प्रसाध्यते ॥
तदेव चोदनोपज्ञमपूर्वं तत्त्ववेदिनाम्।
आराध्येन्द्राद्यपायेऽपि फलदानाय तिष्ठति ॥

अथैवमभ्यर्थितस्य भगवतस्तदभ्यनुज्ञादिविषयैः प्रपत्तिजनितप्र-सादपरिवाहैः प्रतिवचनैः प्रकृतौपयिकवक्ष्यमाणचरमश्लोकार्थोऽपि प्रति-बोध्यते। तथाहि-- अत्र प्रतिहतोऽपीत्यन्तेन अशक्तिपूर्त्या अनागतानन्त-कालसमीक्षयाप्यदृष्टसन्तारोपायतां प्रकाशयता 'अनन्यशरणः' इत्युक्त-विस्तररूपेण प्रथमपादतात्पर्योक्तिः। येनकेनापीत्यादिना त्वमित्यन्तेन द्वितीयपादोक्ताधिकारिकृत्यलाघवादिव्यञ्जनम्। केवलमित्यादिना तु 'अहं त्वा' इति वाक्याभिप्रेतानिष्टनिवृत्तिपूर्वकेष्टप्राप्तिप्रकाशनम्। एवंभूतोऽसी-

# देशवृत्तान्तः ।

वत्सरेऽस्मिन् अस्मच्चक्रवर्तिजन्मदिवसोत्सवे महामहोपाध्यायबिरुदेन संभावितां श्रीमच्चन्द्रशेखरशास्त्रिणः बहुमानयितुं राष्ट्रभरणाधिकृतेषु कृतज्ञतां प्रदर्शयितुं चास्यां शालायां तदन्तेवासिभिः माणवकैः काचन सभा निरवर्ति । तत्र सभानाथपदमध्यतिष्ठन् राजकीयन्यायवादिनः माननीयाः श्रीशिवस्वाम्यार्याः । तेषामनुमोदनपूर्वकमियं पत्रिका विद्यार्थिभिः सप्रश्रयं सप्रमोदं चानुवाचिता ।

आर्याः! विदितैवेयमस्माकं भारतीयहृदयावर्जिका प्रवृत्तिः, यदनुशास्तृप्रवरैर्लार्ड्मिण्टो प्रभृतिभिर्महाभागैः भारतचक्रवर्तितो महामहिमसंपन्नस्य श्रीमदेड्वर्ड् महाराजस्य वत्सरेऽस्मिन्निर्वृत्ते जन्मदिनोत्सवे बहव एव पाश्चात्यविद्याविशारदाः तत्तदनुरूपबिरुदप्रदानेन सप्रणयबहुमानमतीव सत्कृता इति ।

अवसरेस्मिन्नस्मदाचार्यचरणाः संस्कृतपण्डितेष्वचरमाश्च श्रीचन्द्रशेखरशास्त्रिणोपि महामहोपाध्यायबिरुदातिसर्जनेन सम्मानिता इति निसर्गेणैव संस्कृताभिमानिनां, विशेषतश्च तदन्तेवासिनामस्माकं, न केवलमानन्दमुद्भावयति, अपितु विद्वदपाश्चात्यानां पाश्चात्याधिकृतानाममीषां पात्रान्वेषणपाटवं देवभाषाप्रणयित्वञ्च स्पष्टमेव व्यञ्जयति ।

एवमप्रतिविधेयं पौरस्त्यविद्याभिमानमावहत्सु महाशयेष्वमीषु चिरानुसारिणीं च रूढमूलाञ्च कृतज्ञतामाविष्कुर्मः ।

न केवलं वैदुष्योत्कर्षेण, किन्तु तदवश्यमपादनीयाभ्यां विनयप्रबोधाभ्यामपि संपन्नानुत्तमैरात्मगुणैश्च समलंकृतानभिजनवतश्शास्त्रनिष्णातधियो लोकज्ञानसंस्कृतचेतसस्साधुशीलितेनैव पथा सञ्चरमाणानवगतधर्मतत्वान् उपलब्धवर्णांश्च श्रीमदाचार्यचरणान्समासर्जादिदं सद्गुणैकसहवासयोग्यं बिरुदमिति नूनमेवायं सर्वाभिनन्द्यो रत्नकाञ्चनयोस्समागमः ।

बिरुदेनामुना पूर्वाधिकरुचासंगता इमे महाभागाः प्रदातारश्चास्य राजप्रतिनिधिमुखाः महापुरुषः स्सुचिरमेव विलसन्त्विति भगवन्तं भवानीपतिमभ्यर्थयामहे ।

इति शिवम् ।

इति **मैलापुरसंस्कृतमहाविद्यामन्दिराध्येतारः** ॥

## अथ द्वितीयः पादः ॥

द्वितीयपादे तु लिङ्गविचारः । लिङ्गं नाम योग्यतापरपर्यायं सामर्थ्यम् । तच्च श्रुतिकल्पनाद्वारा अङ्गत्वे प्रमाणम् । तथाहि—'बर्हिर्देवसदनं दामि' इत्यादिमन्त्रः स्वनिष्ठबर्हिर्लवनाङ्गताबोधकश्रुतियुक्तः बर्हिर्लवनप्रकाशनसामर्थ्यात् । यत्र यदर्थप्रकाशनसामर्थ्यं तत्र स्वनिष्ठतदङ्गताबोधकश्रुतियुक्तत्वम्, यथा—प्रत्ययवचनविनियुक्ते मन्त्रे, इत्यनुमानेन यद्यत्राङ्गताबोधकश्रुतियुक्तत्वं न स्यात् तर्हि मन्त्रवैयर्थ्यं स्यात् इति तर्कसहकृतेन मन्त्रे बर्हिर्लवनाङ्गताबोधकश्रुतिसिद्ध्या मन्त्रस्य बर्हिर्लवनाङ्गत्वसिद्धिरिति ॥

एवं लिङ्गस्य विनियोजकत्वे सिद्धे अङ्गिविशेषविचारः । तथाहि किमर्थप्रकाशनसामर्थ्यरूपं लिङ्गं मुख्य एवार्थे विनियोजकम्, उत गौणार्थेऽपि, इति विशये शब्दानां मुख्यवृत्त्येव गौणवृत्त्यापि बोधकत्वदर्शनात् गौणार्थेऽपि लिङ्गाविशेषात् विनियोगः संभवति । ततश्च बर्हिःशब्दस्य उलपराजिरूपतृणविशेषे लक्षणया तल्लवनप्रकाशकत्वासंभवात् मन्त्रस्य तत्रापि विनियोगः । ततश्च प्रतिप्रधानगुणावृत्तिन्यायात् मन्त्रस्यावृत्तिरिति प्राप्ते शक्यसंबन्धग्रहणसापेक्षजघन्यार्थप्रतीतेः विलम्बितत्वात् प्रथमप्रतीतमुख्यार्थविनियोगेनैव मन्त्रस्य प्रयोजनाकाङ्क्षाशान्तेर्न गौणार्थे विनियोगः । गौणसामर्थ्येन श्रुतिकल्पनादशायामनुकूलतर्कासंभवात् पूर्वमेव मुख्यार्थविनियोगेन मन्त्रसार्थक्यनिर्णयात् । अत एव गौणस्य स्मारकाकाङ्क्षाध्यानाद्युपायान्तरेणैव निवर्त्यते । अत एव च यत्र प्रकरणे मुख्यार्थोपयोगो न क्लृप्तः, तत्र मन्त्राम्नानबलादेव तत्कल्पना । यथा उपांशुयाजे विष्ण्वादिदेवताप्रतिपादकयाज्या-

पुरोऽनुवाक्यामन्त्राभ्यां देवताकल्पना । यत्र प्रकरणे विरोधिगुणावरोधात् मुख्यार्थविनियोगो न कल्पयितुं शक्यते, तत्र अन्यत्र सामान्यसंबन्धबोधकप्रमाणसत्त्वे तत उत्कर्षः । यथा— 'पूष्णोऽहं देवयज्यया पुष्टिमान् भूयासम्' इति पूषानुमन्त्रणमन्त्रस्य दर्शपूर्णमासप्रकरणपठितस्य प्राकरणिकेषु अग्न्यादिदेवतावरुद्धतया देवताकल्पकत्वासंभवात् अप्राकरणिके पौष्णयागे निवेशः । यागानुमन्त्रणमन्त्रसमाख्यया तत्र सामान्यसंबन्धसिद्धेः अप्राकरणिकनिवेश एव उत्कर्ष इत्यभिधीयते । सामान्यसंबन्धबोधकप्रमाणाभावे उत्कर्षस्याप्यसंभवात् तत्र परं प्रकरण एव जघन्यार्थे विनियोगः । यथा मनोतादाविति । 'त्वं ह्यग्ने प्रथमो मनोता' इत्युक्तत्वात् ॥

इति तृतीयस्याध्यायस्य द्वितीयः पादः ॥

---

## अथ तृतीयः पादः ॥

तृतीयपादे तु वाक्यप्रकरणस्थानसमाख्याविचारपूर्वकं श्रुत्यादीनां बलाबलविचारः । तत्र वाक्यं नाम पदद्वयसमभिव्याहारः । यथा— 'धेनुर्दक्षिणा उच्चैर्ऋचा क्रियते प्रयाजशेषेण हवींष्यभिघारयति' इत्यादौ धेनुदक्षिणादिपदद्वयसमभिव्याहारः । यद्यपि 'दध्ना जुहोति' 'अरुणया क्रीणाति' इत्यादावपि पदद्वयसमभिव्याहारोऽस्ति, तथापि अङ्गत्वघटकीभूतपरोद्देश्यत्वकृतिकारकत्वान्यतरविषयकशक्त्यनधीनबोधप्रयोजकपदद्वयसमभिव्याहारस्यैव वाक्यत्वेन विवक्षितत्वान्न दोषः । "धेनुर्दक्षिणा" इत्यत्र हि धेनुपदोत्तरप्रथमायाः करणत्वे लक्षणा । दक्षिणापदस्य च आनतिसाधनद्रव्यवाचिनः कार्यभूताननतिनिष्ठकर्मत्वे लक्षणा । ततश्च धेन्वा आनतिं

# देशवृत्तान्ताः ॥

पूर्वतोऽनुवृत्ताः ॥

(ख) वेदान्तकक्ष्यायां प्रविविक्षुभिर्विशेषेण पठनीया ग्रन्थाः ॥

(१) पातञ्जलयोगसूत्राणि भोजवृत्तिसहितानि ।

(२) ईश्वरकृष्णीयसांख्यकारिकाः गौडपादीयव्याख्यासहिताः ।

(३) अद्वैतपरिभाषा धर्मराजाध्वरिकृता ।

(४) तत्त्वत्रयम् लोकाचार्यकृतम् ।

(५) दश प्रकरणानि मध्वाचार्यकृतानि (प्रमाणलक्षणमारभ्य विष्णुतत्त्वनिर्णयपर्यन्तम् ) मूलमात्रम् ।

इत्येते पञ्चापि ग्रन्था मतत्रयसाधारण्येन सर्वैरपि पठनीयाः ।

विशेषतस्तु—अद्वैते :—

(१) ब्रह्मसूत्राणि शंकरभाष्यसहितानि ।

(२) भामती (चतुः सूत्री)

(३) पञ्चपादिका विवरणसहिता (प्रथमवर्णकमात्रम्)

(४) बृहदारण्यकोपनिषत् शंकरभाष्यसहिता (आदितस्त्रयः अध्यायाः)

(५) छान्दोग्योपनिषत् शंकरभाष्यसहिता (चतुर्थाध्यायमात्रम् )

(६) माण्डूक्योपनिषत् गौडपादकारिकया शंकरभाष्येण च सहिता ।

(७) भगवद्गीता शंकरभाष्यसहिता ।

(८) गूढार्थदीपिका मधुसूदनसरस्वतीकृता (आदितः षडध्यायाः)

(९) सिद्धान्तबिन्दुः न्यायरत्नावलीसहितः (प्रथमश्लोकविषयसमाप्तिपर्यन्तम् )

(१०) अद्वैतसिद्धिः प्रथमपरिच्छेदे–आदित आरभ्य आगमबाधोद्धारपर्यन्तम् ।

अज्ञानवादः । अनिर्वचनीयतावादश्च ॥

द्वितीयपरिच्छेदे—अखण्डार्थवादः ॥

(११) लघुचन्द्रिका (आदित आरभ्य उपाधिवादपर्यन्तम् )

# A FEW THOUGHTS

ON

## THE SCIENCE OF THE SELF

OR

# Atma Vidya

IN

## SEVEN DISCOURSES

BY

**G. RAMACHANDRA AIYAR B.A., B.L.,**

*High Court Vakil, Tinnevelly.*

Cr. 8vo. Pp. xxvii—397. Cloth Gilt.

Price **Rs. 2.** Postage Extra.

**S. Subbiah Sastriar B.A., District Munsif, Namakkal.**—I am sure the book will be of considerable use to thoughtful readers.

**T. Sambamoorti Rao, B.A., B.L., High Court Vakil, Tanjore.**—Am reading the book with interest. It is indeed instructive.

**P. Narayana Iyer B.A., B.L., F.T.S. Madura.**—I congratulate you on the production of a good readable book on such a subject.

**Dr. F. Otto Schrader, Ph. D. F.T.S. Director, Adyar Library, Adyar.**—The book seems to be a faithful reflection of Advaita-Vedanta.

**G. Gangadhara Somayajulu M.A., B.L., District Munsif, Tanuku.**—A lucid, intelligible and at the same time a learned treatise on a very difficult subject.

**S. Srinivasa Iyer B.A., B.L., Pleader, Negapatam.**—The book is really very instructive and gives very useful hints to real students of our religion.

**M. R. Narayanaswami Aiyar B.A., B.L., District Munsif, Tirukoilur.**—I....found the book contained much valuable matter which deserved to be carefully thought out and digested:....To all thoughtful Souls the book would, I think, serve as a key to the solution of many difficult problems in life.

MANAGER, SRI VANI VILAS PRESS,

SRIRANGAM, Madras Presidency.

THE

# SANSKRIT JOURNAL

OR

# ॥ सहृदया ॥



VOL. XIV.

NO. 10.

EDITOR R. KRISHNAMACHARIAR, M. A.

**CONTENTS.**



PRINTED AT THE
SRI VANI VILAS PRESS,
SRIRANGAM.

PUBLISHED AT
MADRAS.

Registered No. M. 103.

## विषयाः ।



# Sahridaya.

1. Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.

2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.

3. The last forme of every issue is devoted to publishing rare and useful works.

4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.

5. Literary contributions may be addressed to the Editor and all business communications to the Manager, Sahridaya office, Puraswaukum, Madras (N. C.).

6. Annual subscription is Rs. 3 only, including postage.

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिरादृता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. २.] सौम्यवर्षे पौषमासः । [संचि. १०.

## सुभाषितानि ।

निराबाधं पक्षे विलसति वलक्षे सकुतुकं
चकोरोऽयं ज्योत्स्नां रजनिमपि कृत्स्नामनुभवन् ।
अनेहस्यायाते पुनरथ विभाते हतविधे-
रवाप्नोत्यस्तोकं सततमपि शोकं निजहृदि ॥

न ते मूलं स्थूलं न हि तव शरीरं दृढतरं
विशेषेणैवोपर्युपरि तव भागः कृशतरः ।
महीयानेवाहो तव शिरसि भारोऽपि तदपि
त्वया दीर्घायुष्यं क्रमुक कथमासादितमभूत् ॥

कलानाथेन त्वं वहसि समभावं स्वहृदये
पदार्थान्सर्वानप्ययि मुकुर गृह्णासि नचिरात् ।
नृणां द्रष्टव्येषु प्रथमगणनीयोऽसि भुवने
न जाने संभाव्यं तव परमितः कैरिव गुणैः ॥

कटत्तनाट्ट. इ. के. श्रीरविवर्मराजः ।

# मेघसंदेशविमर्शः ॥

गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसंधेः
कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः ।
शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः ॥ ५८ ॥

इह बाह्योद्यानस्थितहरशिरश्चन्द्रिकया नित्यविकासभाजां कुमुदानामवस्थितिं भावयन्कविः कैलासशृङ्गाणां कुमुदसादृश्यं वर्णयति; कैलासं च त्रिदशवनितादर्पणत्वेनानुवर्णयन्, महीधरस्यास्य निरतिशयं सौभाग्यमवगमयति ॥

उत्पश्यामि त्वयि तटगते स्निग्धभिन्नाञ्जनाभे
सद्यःकृत्तद्विरदरदनच्छेदगौरस्य तस्य ।
शोभामद्रेः स्तिमितनयनप्रेक्षणीयां भवित्री-
मंसन्यस्ते सति हलभृतो मेचके वाससीव ॥ ५९ ॥

कैलासस्य धवलिमानं सदृशवस्तुनिर्देशेन विशदयितुं प्रक्रान्तः कविः प्रथमं दर्पणेन तमुपमयन्, 'निःश्वासादिभिरनुक्षणं मलिनीभवन्नयं मुकुरः न समीचीनः' इति तमेव कुमुदैरनन्तरमुपमिमानः, तत्रापि नैमित्तिकं विकासमाकलय्यापरितुष्टः पुनर्गिरिशाट्टहासेन सदृशं भावयन्, तस्यापि कादाचित्कतामनुस्मरन् पद्येऽस्मिन्सद्यःकृत्तद्विरदरदनच्छेदेन सदृशयन्, तावताप्यसंतुष्टः, वर्णयितुमशक्येयमद्रेः शोभा सहृदयैः स्तिमितनयनप्रेक्षणीयैवेत्युद्गिरन्,

तस्यैव गाम्भीर्यादिधर्मान्तराणि लक्षीकृत्य गौराङ्गेण हलभृतोपमिमीते —— इत्यहो ! गाम्भीर्यमनितरसाधारणं महाकविभणितीनाम् ॥

**हित्वा तस्मिन्भुजगवलयं शंभुना दत्तहस्ता**
**क्रीडाशैले यदि च विचरेत्पादचारेण गौरी ।**
**भङ्गीभक्त्या विरचितवपुः स्तम्भितान्तर्जलौघः**
**सोपानत्वं कुरु मणितटारोहणायाग्रयायी ॥ ६० ॥**

भवान्या पूर्वमेव दृष्टभक्तिस्त्वं कैलासमद्य दिष्ट्याऽधिगतः पादचारेण विचरन्त्या गौर्याः कठिनशिलातलस्पर्शं चरणयोरसहमानः, आत्मनः शरीरं सोपानत्वेन परिणमयन् तस्या वात्सल्यमसृणितानां कटाक्षाणां पात्रीभवन्नात्मानं पवित्रीकुरु—— इत्युपदिशन्, मृडान्याः सर्वात्मना दास्यमात्मन इहाविष्करोति भक्तिपरवशः कालिदासः ॥

**तत्रावश्यं वलयकुलिशोद्घट्टनोद्गीर्णतोयं**
**नेष्यन्ति त्वां सुरयुवतयो यन्त्रधारागृहत्वम् ।**
**ताभ्यो मोक्षस्तव यदि सखे धर्मलब्धस्य न स्या-**
**त्क्रीडालोलाः श्रवणपरुषैर्गर्जितैर्भाययेथाः ॥ ६१ ॥**

पूर्वं कदाचिदुज्जयिनीं गतस्त्वं महाकालस्य प्रदोषपूजासमये ते मन्द्रगर्जितं संध्याबलिपटहत्वेन परिणमयन् वनिताललामभूतानां वेश्यानां मधुकरश्रेणिदीर्घाणां कटाक्षाणां पात्रीभूय अविकलं फलं लब्धवान्किल । पश्यतु तावदिदानीमाद्यरसाभिभूतहृदयो भवान् 'कीदृशं फलं भवानीपरिचर्यायाः' इति । मृडानीचरणपङ्कजस्पर्शसमनन्तरमेव क्रीडालोलाभिः सुरयुवतिभिरहमहमिकया परि-

रब्धः, अनितरसुलभान्भोगान्प्राप्नुवन्, ताभिः सप्रणयं सकौतुकं च सहैव गृहाभ्यन्तरं नीतो भविष्यसीत्यहो! महिमा भवानीसपर्यायाः। किं ज्योतिष्टोमादिभिरधिकायाससाध्यैः? किं वा नितान्तशोषितकरणग्रामेण तपसा? किमन्यैरपि संदिग्धफलैरुपासनैः? इति स्वाशयं प्रकटीकरोति महाकविः॥

एवमतर्कितोपनतान्निरतिशयसुखलाभाद्विस्मृतान्यकर्तव्यस्य, मदनशरशरव्यतामुपयाताभिः त्वदीयच्छायोपगूढावयवाभिः सुरयुवतिभिरादरातिशयेनानुक्षणमुपलालितस्य भवतो हृदयादभ्युपपन्नं सुहृत्कार्यं नियतमपसरेदिति बिभेमि। तदङ्ग, किंचिदिव मदर्थे समालम्ब्य धृतिम्, संस्तभ्यात्मानम्, परित्यज्य तरलताम्, दूरीकृत्य देवकामिनीदाक्षिण्यम्, आश्रित्यानिच्छयापि नैष्ठुर्यम्, अभ्यस्य स्वरपरिवर्तनाम्, परुषीकृत्य निसर्गतः श्रवणशुभगान्यपि मन्द्रगर्जितानि, भाययित्वा च रमणीयमपि तरुणीसार्थम्, कथंकथंचिदात्मानं मोचयन्नलकाभिमुखो गच्छेत्यतिकरुणं प्रार्थयते यक्षः॥

**हेमाम्भोजप्रसवि सलिलं मानसस्याददानः**
**कुर्वन्कामात्क्षणमुखपटप्रीतिमैरावतस्य।**
**धून्वन्कल्पद्रुमकिसलयान्यंशुकानि स्ववातै-**
**र्नानाचेष्टैर्जलद ललितैर्निर्विशेस्तं नगेन्द्रम्॥ ६२॥**

सुरवनिताभ्य आत्मानं मोचयित्वा अलकाभिमुखं प्रस्थितवतस्ते मार्गे प्रथमं कनककमलभासुरमविज्ञातकालुष्यं मानसं सरोवरं नयनगोचरीभविष्यति इति वदन् यक्षः— इह निर्मलाम्भसि तोयक्रीडाव्यापृतमैरावतम्, कुबेरस्योद्यानमुच्छृङ्खलं प्रविष्टस्य तस्य चेष्टा-

भिः संक्रुद्धेन धनपतिना विहितमात्मनः प्रेयसीवियोगादिकं चानुस्मरन्, 'ननु स्वैरं विहरतां गजानां चेष्टादिकं प्रवालशोभेव पादपानां नगेन्द्रस्य भूषणमित्यविज्ञायारसिकशिरोमणिरसौ धनपतिः, मां प्रियतमया विश्लेषं प्रापयत्किल; अद्य तु त्वया निर्मलमम्भः स्वैरं पत्वा महावातं सहायमुपलभ्य चैत्ररथे कुसुमद्रुमाणामुच्छेदो निर्दयं करणीयः; कं वा शपेदनुचरमिदानीमनभिज्ञोऽयं गुह्यकेश्वरः?— इति साकूतं सूचयतीत्यभिनन्दन्ति रसिकाः ॥

'नानाचेष्टैर्जलद ललितैर्निर्विशेस्तं नगेन्द्रम्' 'तं तमात्माभिलाषं निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु' इत्यादिभिः, अनवद्यदिव्योद्यानसरोविहारगीतानुसेवनवारुणीरसास्वाददयितापरिरम्भणादिसुखपारतन्त्र्यादेवात्मनः स्वाधिकारप्रमादादिकं समभूदिति द्योतयन्— सखे जलद! मुनीनामपि मदजनकमिदमुद्यानवरं चैत्ररथं नामात्यन्तमलभ्यमल्पपुण्यानाम्; विकचकनककमलभासुरमिदं सरोवरमतिनिर्मलमप्यमन्दरजोविकारमुपजनयत्यमरमिथुनानाम्; नगेन्द्रोऽयमतिरमणीयः सुखानुभवतृष्णामादधाति शोषितकरणग्रामाणां नियतात्मनामपि; बालारुणकोमलान्यमरतरुकिसलयानि प्रसभमर्पयन्ति रागमरागिणामपि; —इति स्वानुभवमेवेह प्रकारान्तरेणावगमयति यक्षः ॥

इममेवाशयमन्यत्रापि 'बृन्दावने चैत्ररथादनूने निर्विश्यतां सुन्दरि यौवनश्रीः' इति वर्णयति महाकविः ॥

**तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलां**
**न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारी ।**

या वः काले वहति सलिलोद्गारमुच्चैर्विमानै-
मुक्ताजालग्रथितमलकं कामिनीवाभ्रबृन्दम् ॥ ६३ ॥

एवमात्मनानुभूतपूर्वान्भोगाननुस्मारितो यक्षः, हेमपल्लवसंस्तरे स्वीयमुत्सङ्गमधिशयानां विगलितांशुकां शिथिलालकां प्रेयसीं हृदये-नालिखन्, नन्वियमलकैव प्रणयिनः कैलासस्योत्सङ्गे कामिनीव सविस्रम्भमनवरतं शयाना 'सर्वर्तुसांनिध्येनाजस्रं शोभमानेऽस्मिन्नुद्देशे महर्षयोऽप्यवशा भवेयुः इति व्यञ्जयन्ती, अभिज्ञतमस्य कामचारि-णस्ते मानसं नियतमावर्जयिष्यत्येव; किं पुनरभिज्ञानान्तरनिर्देशेनेति निपुणमुपसंहरन्नलकाप्रवेशायाभ्रं प्रोत्साहयति मधुरमधुरया सूक्ति-सरण्या ॥

इति मेघसंदेशे प्रथमाश्वासः ॥

---

## श्रीकृष्णलीलायितम् ॥

---

त्वय्येवायत्तौ भोगमोक्षौ दिविषदामपि । तदेष नौ सेवाभावः, योऽयमविनाभावो नाम। अतो नावकल्पये परमार्थतः शोकस्थानमत्र । रूपान्तरपरिग्रहेण तु कदाचिद्विश्लेषं तदात्वदुस्सहमपि अवश्यंभाविनि संश्लेषे रसान्तरमादधानमनुभूय निस्तीर्णशापा पुनरपि प्रकृतिं प्रति-पत्स्यस इति नात्यर्थमनुशयोऽपरिहार्ये वस्तुनि विदुषामुपपद्यते । अहमपि संकल्पकल्पनीयमपि भूभारापनोदमपदिश्य त्वदनुरोधेन

स्वमात्मानमगोचरमपि गोचरं जनदृशां करिष्यामि । वसुदेवकुले प्रसूतोऽपि त्वामेव रमयितुं गोकुले निवत्स्यामि । प्रागेव त्वं ससखीजना व्रज व्रजमेव । वृषभानुगृहिणी कलावती नाम गोपिका त्वां भावयिष्यति दुहितरम् । मय्यवतरिष्यति कृत्स्न एव देवलोको गोलोकश्च स्वैरंशैरवतरिष्यत्येव भुवम्—' इति ॥

अथ श्रीदामानमपि अनन्यशरणं स्वामिसेवाविलोपविरसेन देवीशापेनास्तमितच्छायं शरण्यः— 'श्रीदामन् किमतीतेऽर्थे शोकेन? कं वा न क्रोडीकरोत्यनीश्वरमीश्वरी भवितव्यता? किंच क्रोध एव त्वामासुरीं योनिमनयत् । किमत्र वैभवं पुनरुक्तवादिनो देवीशापस्य? कंचिच्च कालमनुभूतशापो भूतनाथशूलधारानिर्णिक्तवृजिनः प्रतिलप्स्यसे प्रकृतिम् । तत्रापि तु जन्मन्यहीनप्रणयं मयि ते मानसमेव साधनं श्रेयसः—' इत्यादिश्य विससर्ज ॥

स चानुपदं शङ्खचूडो नामासुरः संबभूव । राधापि देवी वृषभानुगृहे लब्धजन्मा यदृच्छावशात् स्वेनैव व्यपदेशेन व्यपदिष्टा ववृधे ॥

तदनु सर्व एव गोगोपिकावर्गो रासमण्डपबृन्दावनादिकं च गोलोकसारं तामवतरन्तीमन्ववततार । देवाश्च देव्यश्च क्षितिक्षेमार्थमवतरिष्यतो हरेरनुरोधेन ये यथा प्रथममादिष्टास्ते तथा भुवि संबभूवुः । कश्यपो वसुदेवः प्रादुरासीत् । अदितिश्च देवकी । उपारूढयौवनो वसुदेवो नवयौवनमृजावदातलावण्यामुपयम्य देवकीं देवकसुतां झणझणायमानकनककिङ्किणीजालमालिभिः शताङ्गशतैर्दर्शितानेकसूर्योदयं गण्डभित्तिगलितमदवारिधारासंपादिताकालदुर्दिनैः कर्णतालपवनजनितवात्यापरिभ्रमैर्महोत्सेधपरिणाहैर्मातङ्गपुङ्गवैरनेकव-

र्णकदलिकालंकृतैरिन्द्रायुधशबलितजलधरानीकलक्ष्मीं दधानम्, प्रयत्नधृतखलीनखणखणायितमुखैः प्रस्फुरत्प्रोथैराकाशमशेषमधःकर्तुमिवोद्गतग्रीवैः अमृतफेनपाण्डुरैरनिभृतावस्थानैरनेकदेशीयैस्तुरङ्गमैः दुग्धोदतरङ्गैरिव परिप्लुतम्, सेनापतिनिदेशसमकालपरिणतविचित्रव्यूहबन्धैः उत्खातकृपाणलतासहस्रोपहितनागलोकाविभ्रमैः समरालाभादन्तःसंभृतवेगमक्षमैरिव वोढुमात्मीयं प्रतापमविश्रान्तदोर्दण्डदुर्ललितैः पदातिबलैः परिबृंहितं हारनूपुरकेयूरपारिहार्यादिमहार्हभूषणकान्तिकर्बुरिततनुच्छायाभिः सुवर्णाचित्रितैः सूर्यांशुसूत्रकृतवानैरिव संकल्पनिर्मितैरिव च पारिजातपल्लवमसृणस्पर्शैः दुकूलवरैराच्छादिताभिः कल्पलताभिरिव सूर्यांशुपरिवृताभिः तारकानिकरपरिकर्मिताभिश्चन्द्रकलाभिरिव समानवयोवेषवर्ष्मकान्तिभिः वेशकन्याभिर्विद्युद्वल्लरीभिरिव मूर्ताभिरुपशोभितम्, चिन्तामणिनिर्विशेषरत्नशतप्रायं दिव्यनिर्माणशङ्कावहबहुविधाविकाजिनरचनादिप्रायं श्वशुरप्रेषितं कन्यापारिबर्हमुपादाय प्रस्थास्यमानः प्रियतमया सह गमनत्वरोद्युक्तयुग्यतुरगखुरपुटपाटितक्षितितलं चित्रकम्बलपरिवृतमुत्तमास्तरणास्तीर्णं रथमारुरोह ॥

कंसस्तु स्वसृवत्सलः सारथ्यमूरीकृत्य स्वयमश्वरश्मीन् जग्राह। शुश्राव चानुपदम्—'अस्यास्त्वामष्टमो गर्भो हन्ता यां नयसेऽबुध—' इत्येवंरूपामात्मविनाशशंसिनीमशरीरिणीं वाणीम्। स तया सृण्येव व्यालगजो गाढविद्धश्चिन्ताविभ्रान्तहृदयः रोषावेशलोहिताक्ष इतिकर्तव्यताविवेकविधुरमतिः प्रतिकलं सृक्कणी लिहन् प्रस्फुरदोष्ठपुटः अनवधारणादुस्स्थवृत्तिः मूलच्छेदप्रतीकार्यो प्रथममेवात्मविपदमनुचिन्त्य रभसोत्खातखड्गो भगिनीं हन्तुमारब्ध ॥

तदा सर्वा एव स्त्रियः सन्नगात्रयष्टयः पारिप्लवदृष्टयो हा हेति चुक्रुशुः । समग्रं च तदग्रेसरमनीकमुदग्रग्रावोच्चयप्रतिरुद्धप्रसरमिव स्रोतः स्रोतस्विन्याः संक्षोभोत्तरङ्गमासीत् । तं तथाभिनिविष्टं स्वसुः केशबन्धग्रथितैकहस्तमपरहस्तोद्यतकृपाणं प्रियतमां च कातरोत्तरलतारकां प्रकम्पस्वेदस्रस्तगात्रीमालोक्य निसर्गधीरो वसुदेवः स्वमाकारमदर्शयन् साम्नैव हितमनुदर्शयन्नुवाच—'महाभाग कथमदृष्टवक्तृकाया गगनचर्या वाचः प्रत्ययेन भवादृशोऽपि सदसद्विवेकी गर्हिते कर्मणि प्रवर्तेत ? आप्तप्रामाण्यादेव हि शब्दप्रामाण्यं प्रमाणविदः प्रतिजानन्ति । श्रुतयोऽपि नाम 'सत्यं वद' इति वक्तारमनुशासति । वक्तॄणां च पुरुषभावसुलभा भ्रमप्रमादविप्रलम्भा विततार्थां वाचमापादयन्ति । अस्तु वा श्रद्धेयमीदृशं वचनम् । तथापि न धीमतामत्र संभ्रमावसरः । कस्माद्वा जनिमतो मृत्युः प्रमाद्यति जगति ? जननिधनाभ्यां पूर्वापरसीमामुद्राभ्यां न किंचिन्न मुद्रितमस्ति वस्तु । इयानत्र विशेषः । धर्म्ये वर्त्मनि वर्तमानस्य निधनमुच्चैर्गतिद्वारम् । इतरस्य तमःकूपमुखमिति । तदिदमनुचिन्त्य क्षणिकस्य देहबन्धस्य कृते दीर्घबन्धं धर्मं नोपरुन्धते मनीषिणः । किञ्च सर्वाणि भूतानि आत्मवत्पश्यन्ति विपश्चितः, विशेषतः प्रजेश्वराः । स त्वमचिरोढायाः बालायास्सप्त गर्भानतीत्याष्टमेन गर्भेण भाविनमात्मनाशममृष्यमाण इमामद्यैव हनिष्यसि । न चेयमपराध्यति । स्त्रीवधः स्वसृवधो निरपराधवधो विस्रब्धवधश्चानेकदोषसंकीर्णोऽयमेक एव तवारम्भः । बलवत्तरसामन्तशतपरिचरितचरणो वीरप्रवरस्सन् भाविगर्भभिया भगिनीं हतवानिति च स्वयशोवध एवायं परिणमति । स्त्रीघातिनो राज्यश्रीरेव हि प्रथमं व्यपेयात् । वरमहीनश्रियः प्राणैर्वियोगः, न पुनर्हीनश्रियो जीवितम्—' इति ॥

स एवं बहुधा निदर्शितोऽपि विपरीतो यदा न प्रतिपेदे तदा भाव्यनिष्टाभ्युपगमेनापि उपस्थितां व्यापदमपनेयां कालान्तरेऽपि भवितव्यतामेव भगवतीमचिन्त्यपरिणामामनुविमृश्य वसुदेवः सोपग्रहमुवाच-- 'वीर! अष्टमो ह्यस्यागर्भस्ते सपत्नो निर्दिष्टः। पुत्रानस्या जातमात्रानुपहरिष्यामि ते । किमनया तपस्विन्या निरागसा हतया' इति । स तद्वचनमसुप्रियः प्रियमादाय विरराम स्वसृवधात् । अनवस्थितचित्तस्य नृशंसप्रकृतेः यत्किंचनकारिणः प्रसादेनापि तस्य नातिनिर्वृतः आनकदुन्दुभिः सह वध्वा स्वं विवेश निवेशम् ॥

अथ कदाचित् कंसः कलहकुतूहलिनः सुरमुनेरुपयातस्य मुखादात्मानमन्यस्मिन् जन्मनि कालनेमिं नाम त्रिदशपरिपन्थिनमसुरारिणा व्यापादितमेतर्हि कंसनामानमवाप्तजननान्तरं तमेव चासुरवैरिणमष्टमं देवकीगर्भमुद्भविष्यन्तं यदूंश्च तत्सेवाहेवाकिनः त्रिदशानेव जातानवधार्य सर्वानेव ज्ञातीन्विद्विषन् बलादाक्षिप्तराज्यः पितरं नियम्य कांश्चिदात्मनः समशीलानामन्त्र्य प्रतीतान् सचिवान् रहसि समादिदेश— 'भोः! सुहृदः! यदेष देवर्षिरविश्रान्तगतिः उत्तानहृदयो यत्किंचनवादी बालवृत्तिः प्रजल्पति, तदिदममहासत्त्वजनोद्वेजनं यद्यपि न तेजस्विनां तेजसि किंचित्करम् , तथापि प्रतिक्रियायामौदासीन्यं न नीतिविदां श्रेयः । प्रतिपक्षसंशयोऽपि हि यत्नादन्विष्य व्युदसनीयः । गृहे काकोदर इति भ्रान्तजल्पितेनापि सशङ्काः परीक्ष्यैव हि प्रविशन्त्यन्तर्विपश्चितः । तदिदानीमस्मच्छ्रेयसि निरतैरवरोधैरनुजीविभिर्वा नारीनरैरनाविष्कृताशयैः देवकीवसुदेवयोश्चेष्टासु दत्तावधानैः भवितव्यम् । अष्टमो गर्भ इति नायमर्थो विस्रम्भायालम् । संख्यात्र विवक्षानुरोधिनी । गणनाक्रमे कस्य वा कतमत्वमैका-

न्तिकम्? अपि चेदानीं हरिर्हि नः प्रतिपक्षः । स चार्थतन्त्रो मायावी विप्रलब्धमन्यद्दर्शयित्वा अन्यदेव करिष्यति । वैरिमूलमनङ्कुरितमेव सुकरमुच्छेत्तुमिति च नीतिविदां निर्णयः । एवं च सति आ प्रथमादनाद्दृत्य परिगणनामभिशङ्कनीयः सर्वशो देवकीगर्भः । प्रमादादुपेक्षितौ च देवकीवसुदेवौ च्छद्मच्छादितदौहृदलक्षणौ यदि जातमात्रमतिवाहयेतामपत्यम्, स नस्तदनु निगूढमुपहितोपचयः परिपन्थी साधयितुमसुकरः संपद्येत । तस्मादस्मिन्नर्थे समस्तैरस्मच्छ्रेयसि स्थितैराप्तवर्गैर्नक्तंदिवमनिमीलितलोचनैरनुत्तानितहृदयैश्च सुस्थिरं स्थीयेत—' इति ॥

कंसार्णवमेवमुद्वर्तमानाभ्यन्तरदुष्टसत्त्वमुत्तरङ्गीकृत्य प्रत्यासेदुषो देवर्षेरुपश्रुतकंसव्यवसायश्च वैकुण्ठनाथः सस्मार पातालगर्भशय्याप्रसुप्तानां षड्गर्भाभिधानानां दानवानाम्, ये किल हिरण्यकशिपुसंभवस्य कालनेमेरमरारियूथनाथस्यात्मसंभवाः पुरा स्वमनादृत्य पितामहं तपस्समाराधितात् त्रैलोक्यपितामहादेव सर्वावध्यतां वरं प्रतिपद्य प्रत्यागताः परसेवाविरसीकृतचेतसा हिरण्यकशिपुना—'रे रे! कुलमहत्तरावमानिनः! कुलघ्नाः! स्वेनैव दर्पेण हताः सलिलगर्भशय्यामितः प्रभृति दीर्घकालमधिशेध्वम् । अन्यस्मिंश्च जन्मनि जातमात्रा एव यूयमनेन स्वपित्रा जात्यन्तरगतेन सामर्षं व्यापादयिष्यध्वे—' इति दत्तशापाश्चिराय स्थावरनिर्विशेषमशेरत । तेषां च कालनेमिनैव कंसव्यपदेशेन प्राप्तकालं कालधर्ममुपपादयिष्यंस्तानेव षड्गर्भान् देवकीगर्भमुपनेतुं योगनिद्रापराभिधानां मायां देवीं मायेश्वरः शशास ॥

अथ च दुरतिक्रमक्रमाया भगवत्या भवितव्यतायाः प्रभावेणानाराध्य पितामहमननुनाथ्य कुलदैवतानि अनुपोष्य षष्ठीमनिष्ट्वा

पुत्रकामेष्टिभिरनाशास्य हृदयेनापि कुलवृद्धैराशंसनीयामुपलेभे सुकृतशतसुलभां दौहृदसंपदम् । या हि तिर्यग्योनिभवेष्वपि भूतेषु दर्शनीयतां कामप्युपदधाति, सापि महादेव्या देवक्या देवतारूपायास्तनुलतां लतामिव प्रसूनश्रीरलंकुर्वाणा नात्मनो न दयितस्य न वा ज्ञातीनां प्रीतये न बभूव । यथा यथा च गर्भो ववृधे तथा तथा भूतात्मा चान्तरात्मा च देवक्याः सममवसेदतुः । अपत्यजननोद्विग्नचेतसश्चानाशंसितोपगम एव नचिरादिवोपतस्थे प्रसूतिमासः । अन्तरेण च कुमारभृत्याविदां भिषजामुपक्रमान् अनपेक्ष्य च कुलवृद्धाजनोपनेयान् मङ्गलोपचारान् कुमारं देवकी व्यजायत ॥

प्रथमजत्वात् कीर्तिमानिति नामकरणेन कृतसंस्कारमर्भकं जातमात्रमेव वसुदेवः सत्यव्रतभङ्गभीरुः कंसायोपजहार । तस्य तथाविधेनार्जवेन कंसस्यापि प्रसादपेशलं मनाङ्मनः परिणनाम । स हि कुमारोपहारिणं वसुदेवमुवाच—– 'नयतु भवानिमं कुमारम् । नास्मादस्माकमस्ति भयम् । अष्टमादेव हि गर्भादत्याहितमशरीरिणी वाणी समाचष्ट—–' इति ॥

अकृतप्रज्ञस्याविमृश्यकारिणो दर्पदाहज्वरविसंष्ठुलप्रकृतेः प्रसादेनापि तेन क्षणिकेनापरितुष्यन् महामना वसुदेवः संदिहानेनैव चेतसा तमर्भकमादाय प्रतिययौ ॥

प्रतिप्रयाते च तस्मिन्नकस्मादुन्निद्रया स्वयैव आसुर्या वासनया वात्ययेवार्णवो विक्षोभिताशयो नारदशंसितमनुस्मृत्य व्यापादितमिवाव्यक्तवृत्तिना हरिणा स्वमात्मानमाकलयन्नतिमात्रजातप्रकम्पः स पापः पुनरपि वसुदेवमप्राप्तावसथमेवाकार्य अकार्यनिस्त्रपस्तं शिशुं चरणयोः

गृहीत्वा शिलायामवाङ्मुखमवजघान । संचूर्णितोत्तमाङ्गमुपरतं सुतमपि दृष्ट्वा नियतेर्नृशंसवृत्तेश्च दुर्वारतामनुपश्यन् नातिव्यथितमनाः स मनीषी प्रतिनिववृते ॥

षट्स्वेवं समतीतेषु देवकीगर्भेषु हतेषु च हन्तव्येषु दैत्येषु दैत्येनैव षड्गर्भेषु संकर्षणो भगवान् वासुदेवादेशादाविवेश देवकीजठरम् । स च गर्भः सप्तमः सप्तसु व्यतीतेषु मासेष्वष्टमे मासि योगेश्वरनियोगवशंवदया योगनिद्रया समाकृष्यान्यतमायाः नन्दपत्न्या रोहिण्या जठरं मथनोत्तरङ्गया क्षीरोदजलवेण्येव बालचन्द्रस्तरङ्गात्तरङ्गान्तरं संक्रमयांबभूवे । तदा गर्भविस्रवो बभूव देवकनन्दिन्याः इति शुद्धान्तचरैरावेदितार्थः सविशेषमष्टमे गर्भे दत्तावधानः कंसो गच्छंस्तिष्ठन् भुञ्जानः शयान आसीनो वा हरिमेव एकमना अनुदध्यौ । यदेव चिराभ्यासनिरुद्धकरणग्रामाणामपि प्रशमविमलेषु मनस्सु मनीषिणां यदृच्छोपनिपातिभिरन्तरायैरन्तरितवृत्ति न निभृतमवस्थातुमुत्सहते, तदिदमनुस्मरणं भगवतः प्राणापायकातर्येणाविच्छिन्नं स उपनिन्ये ॥

अथ सत्यसंकल्पः स्वं संकल्पमविकलयन् मन आनकदुन्दुभेस्ततश्च देवकीजठरं प्रविवेश । अन्तर्गतेन तु महतोऽपि महीयसा तेजसा प्रतिबिम्बितद्युमणिबिम्बेव स्रोतस्विनी दुर्दर्शनामसुहृशामन्यादृशीं भास्वरतां पुपोष ॥

दिनैस्तु गच्छद्भिरुपचीयमानमनवस्कन्दनीयं दधाना तेजस्सारमसुहृदामनासादनीया देवकी हरिगर्भा गुहेव विरराज । योगनिद्रापि सममेव भगवता गोकुले नन्दमहिष्यां यशोदायामात्मानं निदधे । देवकीगर्भशय्यामधिशयानं च शेषशयनं पुरुषोत्तमं दिवि-

षदो वेधःप्रधानाः पौरुषैः सूक्तैरभितुष्टुवुः ॥

एवमतिक्रान्तेषु सप्तसु गर्भमासेषु दशममेव वैजननं मासं दत्तावधानेषु प्रतिपालयत्सु कंसपक्ष्येषु अष्टम एव संप्राप्ते मासे रोहिण्यां कृष्णाष्टमीयुजि निश्शेषसुरवैरिवरूथिनीपराजयोद्घाततया अन्वर्थजयन्तीव्यपदेशायामन्धतमसतिरस्करिणीप्रतिच्छन्नसमस्तरूपे विस्रब्धप्रसुप्तसमस्तजन्तुजाते निशीथे तिमिरकरिघटानिर्दलनालंकर्मीणविमलकरशिखरविस्तारिणि केसरिणीवोदयगिरिकूटग्रावाधिरूढे शिशिररोचिषि, साधुजनमानसेषु दुर्दान्तक्षत्रियापशदापदेशदैत्यानीकदुर्ललितप्रभवमन्धकारं विदलयन् अप्राप्तप्रसववेदनाया देवक्या गर्भात् प्राचीगर्भादिव दिवसकरः प्रादुरास तमसेव बाह्यानि मायया तिरयन्नान्तराणि तत्त्वानि लोकस्य लोकनाथः ॥

तथा चाविर्भूतं मातुरुत्सङ्गे शयानमप्राकृतदिव्यरूपं विशृङ्खलतेजःप्रसरभासुरकिरीटकुण्डलग्रैवेयकहारकेयूरवलयनूपुरादिदिव्यभूषणच्छायास्रोतस्सहस्रसंपातसंवलितदेहप्रभावितानमिन्द्रायुधजालमालिनमिव नवाम्बुदं विजृम्भिताभीशुजालपरिवेषमण्डलेन लक्ष्मीनिवासभवनप्रदीपेन कौस्तुभेनालंकृतश्रीवत्सलक्षणविपुलवक्षःकवाटम् , किमुदरान्निर्गतः ? किं वा गगनतलाद्गलितः ? उत वा रसातलादुन्मग्नः ? इत्यविभावितास्युदयं दृष्ट्वा तमचिन्तनीयमहिमानं भयविस्मयप्रश्रयनिभृताशेषगात्रः वसुदेवः प्रेम्णा द्रवीभवतः स्वचित्तस्याप्रभवन्नियमने यत्ननिरपेक्षप्रसराभिरभितुष्टाव वाग्भिः ॥

देवकी च तथाविधं परमेष्ठिनः प्रसादमचिन्त्यहेतुकमनुचिन्त्य प्रहर्षस्रोतसा दूरमुह्यमानं गुणानुवर्णनेनैव कथंचि-

दात्मानमवललम्बे । तथा च दिव्यमङ्गलरूपोपलम्भविस्मयास्तिमितदर्शनौ वेलातिगप्रेमरसपरिप्लुतान्तरङ्गतया लीलालेशविलसितजगत्कार्यप्रतिसर्गसमवधानव्यतिकरे परे महिम्नि कंससंभवव्यापत्तिपरिशङ्कापर्याकुलाशयौ दम्पती दृष्ट्वा भगवान् प्रसादपेशलामिमां वाचं विससर्ज— 'युवां खलु समतीते स्वायम्भुवे मन्वन्तरे सुतपा नाम प्रजापतिः पृश्निर्नाम च तत्पत्नी भूत्वा प्रजासर्गव्यग्रावुग्रेण तपसा समाराधितं प्रसन्नमनेनैव च रूपेण साक्षादाविर्भूतं मां वाञ्छिताखिलवरप्रदं मन्मायातिरोहितहितावमर्शौ मत्सदृशं पुत्रमवृण्वाथाम्, नत्वपवर्गम् । अहमपि च प्रतिश्रुतवरः कृत्स्नेष्वपि लोकेष्वात्मनः सदृशमपश्यन्नात्मनैव पृश्निगर्भ इति कृतव्यपदेशो युवयोः अभूवमात्मभवः । अन्यस्मिंश्च जन्मन्यदितिकश्यपरूपयोर्युवयोर्बलिनिग्रहापदेशेन वामनरूप इन्द्रावरजः समजनिषि । तयोरेव च युवयोरेतस्मिन् जननान्तरे कृष्णो नामाहमाविर्भूतः । त्रिः पुत्रवरं वृतोऽहमवितथप्रार्थनः स्वेन संकल्पेन त्रीण्येतानि जन्मान्यग्रहीषम् । अस्मिंश्च मद्रूपे पुत्रस्नेहसंवलितेनासकृदुन्मिषितभक्तिरूपेण भावबन्धेनानन्यरसयोरपुनर्भवोऽपि देहावसाने युवयोर्भविष्यति—' इति पारमेश्वरं भावमभिनयता वचनोपन्यासेन कृताश्वासं प्रश्रयप्रह्वमन्तिकस्थं पुनर्वसुदेवमादिदेश देवदेवः—'यदि नाम कंसभयसंविग्नोऽसि, इदानीमेव मामादाय गोकुलं गन्तुमर्हसि । तत्र च सद्यःप्रसूतायाः नन्दमहिष्याः यशोदायाः शयने निधाय मां तस्याश्च तां दारिकामादाय प्रत्यायातो देवकीशयने निवेशय—' इत्येवमभिभाषमाण एवोपसंहृतदिव्यरूपः प्राकृत इव शिशुः समदृश्यत । अनुपदमादाय बालकं प्रस्थिते वसुदेवे कालायश्शृङ्खलायन्त्रगाढयन्त्रिता अनुद्घाटिताः पुरद्वारो विवृता

बभूवुः । रक्षिणामेव तु योगनिद्रानिरुद्धचेष्टानामिन्द्रियद्वाराणि गाढयन्त्रितानि नोन्मिमीलुः । भगवद्यानसमुचितं दुन्दुभिवाद्यमिव दर्शयन्नुपांशुगर्जितो विरलं ववर्ष जलधरः । विहारशयनासनादिषु यथार्हपरिणमितात्मा सर्वथा वरिवस्यारसिको भगवान् अनन्तः फणासहस्रवारितासारः शीर्षण्यमणिकिरणातपव्यपोढघनान्धकारो भुजमध्यश्लिष्टबालकमनुययौ वसुदेवम् । कूलंकषप्रवाहोन्मूलिततटरुहतरुलतागुल्मा च कलिन्दनन्दिनी खड्गच्छिन्नाङ्गीव कालभुजगी भागद्वयावस्थितोत्तरलोभयखण्डा नीलमणिमयभित्तिद्वयावरुद्धपार्श्वमिव स्थलमयं मार्गं मुमोच ॥

एवमीश्वरप्रभावप्रत्यस्तमितदैवमानुषाशेषप्रतिबन्धमतिलङ्घ्य पन्थानं निद्रापरवशसमस्तपरिजनमघटितद्वारं विगाह्य नन्दमन्दिरं सद्यःप्रसूताया अविविक्तस्त्रीपुंसविवेकायाः पार्श्वशायितेनार्भकेण सह प्रसवायासप्रसुप्ताया यशोदायाः शयने विन्यस्य स्वमर्भकं यशोदादारिकामादाय पूर्ववदपास्तप्रतिरोधं मार्गमतिक्रम्य गृहागतो देवकीशयने कन्यां निदधे ॥

प्रतिप्रविष्टे च तस्मिन् भूयश्च यथापुरं द्वारः संवृता गाढयन्त्रितशृङ्खलायन्त्राश्च संवृत्ताः ॥

अथ तस्य दारकस्य रुदितध्वनिं निशम्य रभसोत्थिता रक्षिणश्चटुलचरणपाताः प्रधाव्य कंसाय निवेदयांचक्रुः । स तु तेनैव हृदयार्पितेन शल्येन चिरानुभूतोद्वेगो रक्षिवचनमाकर्ण्य तत्क्षणत्यक्तपर्यङ्कः संभ्रमपारिप्लवस्रस्तसिचयो भूताविष्ट इव उद्भ्रान्तदृष्टिर्मधुमदेन निद्राशेषेण च भूयिष्ठकषायीकृताक्षः सूतिकागारं प्रविश्य

(क्रमशः।)

नायां कुथायां निपत्य केयूरकेणोत्सङ्गे गृहीतचरणयुगलः दोलायमानेन चेतसा चिन्तां विवेश । 'किं तावदस्या गन्धर्वराजदुहितुः सहभुव एते विलासाः । आहोस्विदनाराधितप्रसन्नेन मकरकेतुना मयि नियुक्ताः । यन्मां सरागेण चक्षुषा तिर्यग्विलोकयति । विलोकिता च मया लज्जयात्मानमावृणोति' इति ।

अथ कादम्बरीपरिजनेन निर्वर्तितस्नानविधिः अर्चिताभिमतदैवतः क्रीडापर्वत एव सर्वमाहारादिकमहःकर्म चक्रे । अथ शनैःशनैरदर्शनतामुपगते भगवति गभस्तिमालिनि कादम्बरी चन्द्रापीडसमीपमागत्य कृतप्रस्तावा कथं राजा तारापीडः? कथं देवी विलासवती? कथमार्यः शुकनासः? कीदृशी चोज्जयिनी? कियत्यध्वनि सा? कीदृक् भारतं वर्षम्? इत्यशेषं पप्रच्छ । एवंविधाभिश्च कथाभिः सुचिरं स्थित्वोत्थाय केयूरकं चन्द्रापीडसमीपशायिनं समादिश्य शयनसौधशिखरे दुकूलवितानास्तीर्णे शयनमभजत । चन्द्रापीडोऽपि तत्रैव शिलातले केयूरकेण संवाह्यमानचरणः कादम्बर्या निरभिमानतामतिगम्भीरतां च महाश्वेताया निष्कारणवत्सलतां गन्धर्वलोकस्यातिसमृद्धिं च मनसा भावयन् क्षणादिव क्षणदां क्षपितवान् ।

अथ समुद्गते सवितरि शिलातलादुत्थाय चन्द्रापीडः कृतसंध्यानमस्कृतिः गृहीतताम्बूलः 'केयूरक! विलोकय, देवी कादम्बरी प्रबुद्धा वा न वा? । क्व वा तिष्ठति?' इत्यवोचत् । गतप्रतिनिवृत्तेन च तेन, 'देव! मन्दरप्रासादस्याधस्तादङ्गणसौधवेदिकायां गन्धर्वराजसकाशात् प्रतिनिवृत्तया महाश्वेतया सहावतिष्ठते, इत्यावेदिते तामालोकितुमाजगाम । समुपसृत्य कंचित्कालं स्थित्वा महाश्वेताया

वदनं विलोक्य मन्दस्मितमकरोत् । असौ तु तावतैव विदिताभिप्राया कादम्बरीमब्रवीत् । 'सखि! जिगमिषति खलु कुमारः । पृष्ठतो राजचक्रमविदितवृत्तान्तं दुःखमास्ते । अतोऽभ्यनुजानातु भवती'ति। अथ कादम्बरी 'स्वाधीनोऽयं जनस्सपरिजनः कुमारस्य। क इवात्रानुरोधः?' इत्यभिधाय गन्धर्वकुमारानाहूय प्रापयत कुमारं स्वां भूमिम्' इत्यादिदेश। चन्द्रापीडोऽप्युत्थाय 'देवि! किं ब्रवीमि?। बहुभाषिणो न श्रद्दधाति लोकः। स्मर्तव्योऽस्मि परिजनकथासु' इत्यभिधाय कन्यकान्तःपुरात् निर्जगाम । कादम्बरीवर्जमशेषः कन्यकाजनः तं व्रजन्तमाबहिस्तोरणादनुवव्राज । निवृत्ते च कन्यकाजने केयूरकोपनीतं वाजिनमारुह्य गन्धर्वकुमारैरनुगम्यमानः हेमकूटान्निर्जगाम । क्रमेण च प्राप्य महाश्वेताश्रमम्, अच्छोदसरस्तीरे संनिविष्टम् इन्द्रायुधखुरपुटानुसारेणैवागतमात्मनः स्कन्धावारमपश्यत् । निवर्त्य च गन्धर्वकुमारान् सानन्देन सविस्मयेन स्कन्धावारजनेन प्रणम्यमानः स्वभवनं विवेश ।

अथ वैशम्पायनेन पत्रलेखाभिधानया ताम्बूलकरङ्कवाहिन्या च सह 'एवं कादम्बरी, एवं महाश्वेता' इत्यनयैव कथया दिवसमनैषीत् । अपरेद्युः प्रभाते स्वयमास्थानमण्डपगतः सहसैव प्रतीहारेण सह प्रविशन्तं केयूरकं ददर्श । तं च कुशलानुयोगानन्तरं रहःप्रदेशमानीय 'कथय को वा वृत्तान्तो गन्धर्वलोके?। आसीद्वा कच्चिदस्मदाश्रयिणी कथा?' इत्यपृच्छत् । केयूरकस्त्वेवमाचचक्षे । 'देव! निर्गते त्वयि देवी कादम्बरी प्रबलेन केनाप्याधिना परिभूयमाना किमपि चिन्तयन्ती स्नानपानाशनादिष्वपि शिथिलितप्रयत्ना दिवसमनैषीत् । उषसि च देवस्य वार्तोपलम्भाय

मामादिष्टवती' इति । चन्द्रापीडस्तदाकर्ण्य सरभसमारोपितपर्याणमिन्द्रायुधमारुह्य पश्चादारोप्य पत्रलेखाम् अन्यतुरगारूढेन केयूरकेणानुगम्यमानः हेमकूटं ययौ ।

आसाद्य च कादम्बरीभवनद्वारमवतीर्य द्वारपालार्पिततुरङ्गः कादम्बरीप्रथमदर्शनकुतूहलिन्या पत्रलेखयानुगम्यमानः केयूरकेणोपदिश्यमानमार्गः हिमगृहमध्यभागे कुसुमशयनमधिशयानां कादम्बरीं व्यलोकयत् । अथ सरभसमुत्थाय विरचितसमुदाचारायै तस्यै केयूरक उपसृत्य 'देवि! देवस्य चन्द्रापीडस्य प्रसादभूमिरेषा ताम्बूलकरङ्कवाहिनी' इत्यभिधाय पत्रलेखामदर्शयत् । कादम्बरी तु दृष्ट्वा ताम्, 'अहो मानुषीषु पक्षपातः प्रजापतेः' इति चिन्तयांबभूव । कृतप्रणामां च तां सादरमेह्येहीत्यभिधायात्मनः समीपे समुपावेशयत् । चन्द्रापीडश्च कादम्बर्यामियं विकृतिर्मनसिजकृता वा नवेति सन्दिहानो निपुणालापेनापृच्छत्— 'देवि! कामरतिं निमित्तीकृत्य प्रवृत्तोऽयं सन्तापः? । इच्छामि च देहदानेनापि स्वस्थामत्रभवतीं कर्तुम्' इति । अथ कादम्बरी शालीनतया तूष्णीमेव स्थित्वा मन्दस्मितं केवलमकरोत् । मदलेखा प्रत्यवादीत् 'कुमार, किं कथयामि? । अस्याः खलु कुमारभावोपेतायाः दारुणोऽयमकथनीयस्संतापः' इति । चन्द्रापीडोऽप्युभयथा घटमानार्थतया संदेहदोलारूढेनैव चेतसा महाश्वेतया सह प्रीत्युपचयचतुराभिः कथाभिर्महान्तं कालं स्थित्वा महता यत्नेन मोचयित्वात्मानं स्कन्धावारगमनाय निर्ययौ । निर्गत्य च तुरङ्गमारुरुक्षन्तं पश्चादागत्य केयूरकोऽभिहितवान् । 'देव! मदलेखा विज्ञापयति । देवी कादम्बरी प्रथमदर्शनजनितप्रीतिः पत्रलेखां निवर्त्यमानामिच्छति

पश्चाद्यास्यति इति, श्रुत्वा देवः प्रमाणम्' इति। आकर्ण्य चन्द्रापीडः तथेत्यभ्युपगम्य तां तत्रैव स्थापयित्वा स्कन्धावारमाजगाम। प्रविशन्नेव पितुस्समीपादागतम् आलेखहारकं प्रीतिविष्फारितेन चक्षुषाभिवीक्ष्य विधृततुरङ्गमो दूरादेवापृच्छत्। अङ्ग! कच्चित्कुशली तातस्सह सर्वेण परिजनेन अम्बा च सर्वान्तःपुरैः? इति। अथासावुपसृत्य प्रणामानन्तरं देव! यथाज्ञापयसीत्यभिधाय लेखद्वितयमर्पयांबभूव। युवराजस्तु तच्छिरसि कृत्वा स्वयमेव तदुन्मुच्य क्रमशः पपाठ। 'स्वस्त्युज्जयिनीतः महाराजाधिराजो देवस्तारापीडः सर्वसम्पदामायतनं चन्द्रापीडमुत्तमाङ्गे चुम्बन्नन्दयति। कुशलिन्यः प्रजाः। किन्तु कियानपि कालो भवतो दृष्टस्य गतः। बलवदुत्कण्ठितं नो हृदयम्। अतो लेखवाचनविरतिरेव प्रयाणकालतां नेतव्येति'। शुकनासप्रेषिते द्वितीयेऽप्यमुमेवार्थमवाचयत्। अथ यथाज्ञापयति तात इत्युक्त्वा तथैव च तुरगाधिरूढः प्रयाणपटहमवादयत्। समीपे स्थितं महाबलाधिकृतं मेघनादनामानम् 'भवता पत्रलेखया सहागन्तव्यम्। नियतं च केयूरकस्तामादायैतावतीं भूमिमागमिष्यती' त्यादिश्य वैशम्पायनं स्कन्धावारभरे नियुज्य तमेव लेखहारकमुज्जयिनीमार्गं पृच्छन् प्रतस्थे।

क्रमेण च विपिनान्यतिक्रम्य रमणीयेषु प्रदेशेषु कृतवसतिः अल्पैरेवाहोभिरुज्जयिनीं प्रविवेश। तत्र प्रसारितभुजेनेह्येहीत्याहूय पित्रा सुचिरं गाढमुपगूढः कृतनमस्कारश्चन्द्रापीडः करे गृहीत्वा विलासवतीभवनमनीयत राज्ञा। तयापि तथैव प्रत्युद्गम्याभिनन्दितागमनः तत्र दिग्विजयसंबद्धाभिरेव कथाभिः कंचित्कालं स्थित्वा शुकनासं द्रष्टुमाययौ। तत्राप्यमुनैव क्रमेण सुचिरं स्थित्वा निवेद्य वैश-

म्पायनं स्कन्धावारवर्तिनं कुशलिनम्, आलोक्य च मनोरमामागत्य च विलासवतीभवन एव सर्वाः स्नानादिकाः क्रिया निरवर्तयत् । ततो निजभवनं गत्वा रणरणकखिद्यमानमानसः कादम्बर्या विना सकलमेव महीमण्डलं शून्यममन्यत । तद्वार्ताश्रवणोत्सुकश्च पत्रलेखागमनं प्रत्यपालयत् । कतिपयदिवसापगमे मेघनादः पत्रलेखामादायागच्छत् । कृतनमस्कारा च सा चन्द्रापीडमब्रवीत् । 'देव ! भवन्तमुद्दिश्य विषमशरशिलीमुखजर्झरितहृदयां देवीं कादम्बरीं दूरीकुर्वता देवेन किमिदमापन्नवत्सलायाः स्वप्रकृतेरनुरूपं कृतम् । अहं किल मन्मथस्य परां कोटिमधिरूढया तया सद्य एव भवन्तमानेतुमेव प्रेषिताऽस्मि' इति । श्रुत्वैतच्चन्द्रापीडो नितरां पर्याकुलश्चेतस्यकरोत् । अहो सन्देहदोळाधिरूढं मे जीवितम् । एवमाज्ञापितमागमनाय मे निष्कारणवत्सलया देव्या कादम्बर्या । अम्बा तु मे निमेषमात्रमपि मामपश्यन्ती दुःखमास्ते । दुस्त्यजा जन्मभूमिः । परिग्राह्या कादम्बरी । कालातिपातासहं मनः । विप्रकृष्टमन्तरं हेमकूटविन्ध्याचलयोरिति । एवमलब्धनिर्वृतिश्चन्द्रापीडः कथमपि कतिपयान्वासरान् गमयामास ॥

अथैकदा केयूरकोऽपि चन्द्रापीडमागत्य व्यजिज्ञपत् 'देव ! यदैव पत्रलेखां मेघनादाय समर्प्य प्रतिनिवृत्तेन मयायं देवस्योज्जयिनीगमनवृत्तान्तो निवेदितः, तदा महाश्वेता दीर्घमुष्णं च निःश्वस्य सनिर्वेदमुत्थाय पुनस्तपसे स्वमेवाश्रमपदमभजत । ततो द्रुघणाभिहतेवासह्यवेदना कादम्बरी त्वदर्थे संप्रति महान्तमायासमनुभवति । तदविलम्बेनैव गमनाय यत्नः क्रियताम्' इति । श्रुत्वैतच्चन्द्रापीड एवं व्यचिन्तयत् । किं कारणं व्यपदिश्याह-

मात्मानं मोचयामि ? । कथं वा मुञ्चतु मां तातोऽम्बा वा ? । सुहृत्साध्येऽस्मिन्नर्थे किं करोम्येकाकी । वैशम्पायनोऽप्यसंनिहितः पार्श्वे मे'। इत्येवं चिन्तयन् दशपुरं यावत्परागतः स्कन्धावारः इति किंवदन्तीं श्रुत्वा प्रहर्षपरवशः केयूरकमब्रवीत् । 'केयूरक ! करतलवर्तिनीं सिद्धिमवधारय प्राप्तो वैशंपायन' इति । ततो मेघनादकेयूरकौ पत्रलेखया सह पुरतो विसृज्य वैशम्पायनावलोकनत्वरितमानसः पित्रानुमतो दशपुरं प्रति प्रतस्थे । गत्वा च प्रविश्य स्कन्धावारं समन्तादञ्जलिव्यग्रहस्तान् परिजनान्, कस्मिन् प्रदेशे वैशम्पायनस्तिष्ठति ? इति पप्रच्छ । ते चैवं व्यजिज्ञपन् । 'देव ! पृष्ठतः स्कन्धावारमनुपालयद्भिः शनैश्शनैर्भवद्भिरागन्तव्यमित्यादिश्य गतवति देवे परेद्युराहतायां प्रयाणभेर्याम् अस्मान् वैशम्पायनोऽभ्यधात् । 'अतिपुण्यं ह्यच्छोदाख्यं सरः पुराणे श्रूयते । तदस्मिन् स्नात्वा प्रणम्य चास्यैव तीरभाजि सिद्धायतने भगवन्तं भवानीपतिं व्रजामः' इत्यभिधाय चरणाभ्यामेवाच्छोदसरस्तीरमयासीत् । तत्र चातिरम्यतया सर्वतो दत्तदृष्टिः संचरन्नागमनायानुरुध्यमानः परिच्छेदनिष्ठूरमस्मानाह स्म । मया तु न गन्तव्यमस्मात्प्रदेशात् । गच्छन्तु भवन्तः स्कन्धावारमादाय । इत्युक्तवन्तं तमकस्मान्नाम वैराग्यकारणमुत्पन्नमित्याशङ्क्य सानुनयमागमनाय पुनः पुनः प्रतिबोध्य तादृशासंबद्धानुष्ठानेन जातपीडाः निष्ठुरमप्यभिहितवन्तो वयम् । तथाप्यनिवार्यदुराग्रहे तस्मिन् किमेतदिति विस्मितान्तरात्मानः दिनत्रयं स्थित्वा निष्प्रत्याशाः तदानयनाय तत्परिकरं तत्र स्थापयित्वा निवृत्ता वयम्' इति । एतदाकर्ण्य चन्द्रापीडः पर्याकुलितचेताः सद्य एव नगरमागत्य पित्रानुमतः तदानयनाय तमेवोद्देशमभिप्रतस्थे । आसाद्य च तदेवाच्छोदं

चतुर्ष्वपि पार्श्वेष्वन्विष्यन्नेव महाश्वेताश्रममाजगाम । प्रविश्य च गुहाद्वार एव समुपविष्टां कथमपि तरलिकया विधृतशरीरां विषण्ण-वदनां महाश्वेतां दृष्ट्वा किमेतदिति तरलिकामपृच्छत् ॥

अथ बाष्पगद्गदकण्ठा महाश्वेतैव प्रत्यवादीत् । महाभाग! श्रूयताम् । केयूरकात् भवद्गमनमाकर्ण्य समुत्पन्नानेकगुणवैराग्या पुनः कष्टतरतपश्चरणायात्रैवागताहं महाभागस्यैव तुल्याकृतिं ब्राह्म-णयुवानमपश्यम् । स तु मामुपसृत्य प्रत्यभिजानन्निव सुचिरमालोक्या-ब्रवीत् । 'वरतनु! कोऽयं विसदृशानुष्ठाने तव प्रयत्नः । यदियं मालतीमालेव कण्ठप्रणयैकयोग्या तनुरनुचितेनामुना तपश्चरणक्लेशेन म्लानिमुपनीयते । दृश्यते हि लोके वयस्सदृशमाचरणं सर्वस्य जनस्य' इति । अहं तु तं वदन्तमपि न किञ्चिदपृष्ट्वैवान्यतो गत्वा तरलिकामाहूयाब्रवम् । तरलिके! योऽयं युवा कोऽपि ब्राह्मणाकृतिः, अस्यावलोकयतो वदतश्चान्य एवाभिप्रायो मयोपलक्षितः । तन्निवार्य-तामयं यथा पुनरत्र नागच्छति । अथ निवारितोऽप्यागमिष्यति तदा-वश्यमेवास्याभद्रकं भविष्यतीति । स तु निवार्यमाणोऽपि नात्याक्षी-देवानुबन्धनम् । अथातीतेषु केषुचिद्दिवसेष्वेकदा गाढायां यामिन्यां स मामुपसृत्याब्रवीत् । 'चन्द्रमुखि हन्तुमुद्यतो मामयं कुसुमसायकः । तच्छरणमागतोऽस्मि रक्ष मा'मिति । तदाकर्ण्याहमाह पाप! कथम-निरूप्यैव सत्समयं शुक इव प्रलपसि । कथमेवं गदतो मामुत्तमाङ्गे तव न पतितं वज्रम् । इत्युक्त्वा चन्द्राभिमुखी भूत्वा कृताञ्जलिः पुनरवदम् । भगवन् लोकपाल, यदि मया देवस्य पुण्डरीकस्य दर्शना-त्प्रभृति मनसाऽप्यपरः पुमान् न चिन्तितः तदायमलीककामी मदी-रितायामेव जातौ पतत्विति । स च मे वचसोऽस्यानन्तरमेव च्छिन्नमू-

लस्तरुरिव क्षितावपप्तत् । उत्क्रान्तजीवितेऽस्मिन् कृताक्रन्दात्तत्परिजनात् अमुं महाभागस्यैव मित्रमिदमधिगतवती" । इति बाष्पं विससर्ज । तदाकर्ण्य चन्द्रापीडस्य स्वभावसरसं हृदयमस्फुटत् । परिजनाश्च निश्चेष्टमवनीतले पतितं तमालोक्य करुणमाचुक्रुशुः ।

अत्रान्तरे पत्रलेखानिवेदितचन्द्रापीडगमना कादम्बरी महाश्वेतादर्शनं व्याजीकृत्य मदलेखया सह तत्रैवाजगाम । दृष्ट्वा च तं तथाविधं सा किमिदमिति प्रमूढचेतना मुक्ताक्रन्दा धरातले निपपात । अथ चिराल्लब्धसंज्ञा कादम्बरी महाश्वेतां कण्ठे गृहीत्वा एवमवादीत् । प्रियसखि! तवास्ति काचन प्रत्याशा, मम पुनर्हताशायास्सापि नास्ति । तदिममात्मानं देवस्य कण्ठलग्ना विभावसौ निर्वापयामि । आमन्त्रये प्रियसखीम् पुनर्जन्मान्तरसमागमाय । इत्यभिधाय चन्द्रापीडचरणौ कराभ्यामुत्क्षिप्याङ्केन धृतवती । अथ तस्करस्पर्शेनोच्छ्वसत इव चन्द्रापीडदेहात् झटित्यव्यक्तरूपं किमपि चन्द्रधवलं ज्योतिरुज्जगाम । अनन्तरं च विहायस्यशरीरिणी वागश्रूयत । वत्से महाश्वेते! पुनरपि त्वं मयैव समाश्वासयितव्या वर्तसे । तत्ते पुण्डरीकशरीरं मल्लोके मत्तेजसाप्यायमानं अविनाशि भूयस्त्वत्समागमाय तिष्ठत्येव । इदमपरं मत्तेजोमयं स्वत एवाविनाशि विशेषतोऽमुना कादम्बरीकरस्पर्शेनाप्यायमानं चन्द्रापीडशरीरमत्रैव भवत्योः प्रत्ययार्थमाशापक्षयादास्ताम् । यत्नतः परिपालनीयमासमागमप्राप्तेरिति । तच्छ्रुत्वा विस्मयाक्षिप्तहृदयः सर्व एव परिजनः गगनतलनिवेशितनिर्निमेषलोचनः लिखित इवातिष्ठत् । पत्रलेखा तु दारुणं तद्दुःखमसहमाना भूताविष्टेव सरभसमुत्थाय परिवर्धकहस्तादिन्द्रायुधमाच्छिद्य तेनैव सहात्मानमच्छोदसरस्याक्षिपत् ।

(क्रमशः।)

# स्थावरतत्त्वदर्शनम् ॥

**यज्ञशर्मा**— सखे! सम्यगवबोधितोऽस्मि मूलानामावश्यकताम् । अद्यैवाहं 'छिन्नमूल इव द्रुमः' इति महाकविभणितावुपमा-चातुरीमनुपश्यामि ॥

**चन्द्रपालः**— आम्, सत्यमाह भवान् । विदितलोकयाथातथ्यानाम्, अनुभूतकाव्यालङ्कृतिचमत्काराणां सहृदयानामेव साहितीरसास्वादनैपुणी समुल्लसति । अनवरतमतिगहने शास्त्रदुर्गे संचरतामविदितलोकतत्त्वानां पुनः शास्त्रमल्लानां भीतेवैषाऽतिदवीयसी नात्मानमपि दर्शयति । उक्तं चाभियुक्तैः— 'संचर साहिति वत्से! श्रवसोरुपकण्ठमेव रसिकानाम् । नोचेदानखचूडं तार्किकभल्लूकमल्लदष्टा स्याः ॥' इति ॥

**यज्ञशर्मा**— वयस्य! भवता सह संलापेन ममापि सरसालापता भविष्यतीति मन्ये । पश्य वृक्षजीवितभूतस्य मूलस्य स्वरूपमविज्ञायेव स्वार्थैकपरेऽस्मिन् लोके—

'कश्चिन्नवं पल्लवमाददाति
कश्चित् प्रसूनानि फलानि कश्चित् ।
परं करालेऽस्य निदाघकाले
मूले न दाता सलिलस्य कश्चित् ॥'

**चन्द्रपालः**— वयस्य, सर्वे स्वार्थपरा लोका नोपकारं स्मरन्ति हि । तथाचात्र समुद्रस्य वचनम्—

'पीयूषेण सुराः, श्रिया मुररिपुः, मर्यादया मेदिनी,
शक्रः कल्परुहा, शशाङ्ककलया शर्वोऽपि सन्तोषितः ।
मैनाकादिनगा निजोदरपुटे यत्नेन संरक्षिताः
मच्छोषीकरणे घटोद्भवमुनिः केनापि नो वारितः ॥'

**यज्ञशर्मा**— यदीश्वरो वृक्षाणां मूलानि नाकल्पयिष्यत् तदा सर्वेऽपि वृक्षा मनुजानामादराभावेन विलयमुपागमिष्यन् ॥ सखे! किंचिदिवावधेहि, पूर्वं न्युप्तमपि बीजमङ्कुरोत्पत्त्यनन्तरं न दृश्यते । 'तस्य कीदृशी गतिरासीत्?' इति परमस्ति मे विचिकित्सा ॥

**चन्द्रपालः**— सखे! अङ्कुरोत्पत्त्यनन्तरं बीजं भूमावेव विशीर्णस्वरूपमदर्शनमुपयाति ॥

**यज्ञशर्मा**— न सम्यगवगच्छामि सूक्ष्मतत्त्वम् । बीजादुत्पन्नः अङ्कुरः स्वोत्पत्तिनिदानं स्वयमेव नाशयतीति नैष सर्वथा साधुसेवितः पन्थाः । उपजीव्याविरोधेन हि कार्याणां सामञ्जस्यमभ्युपगच्छन्ति लोकतन्त्वनिष्णाताः ॥

**चन्द्रपालः**— मित्र! समयाचाररक्षार्थमेषा सामयिकी नीतिरुपकल्पिता तान्त्रिकैः । अपि च कोऽयमुपजीव्यविरोधो नाम? कीदृशं चान्याय्यत्वं तत्रोपलभ्यते? अपि भवतः कर्णमूलमुपागतो वृश्चिकीगर्भन्यायः अश्वतरीगर्भन्यायश्च । वृश्चिकाः स्वमातुरुदरं प्रभिद्य किल बहिरागच्छन्ति ॥

**यज्ञशर्मा**— सखे! सम्यगभिज्ञोऽसि लोकतन्त्रव्यवहाराणाम् । भवतु, अन्यदपि पृच्छामि । वृक्षेषु प्रधानमेकं मूलम्, उपमू-

लानि च बहूनि सन्ति । किमत्र प्रधानमूलमुपमूलानि च समकालमेवोत्पद्यन्ते ? ॥

**चन्द्रपालः—** सखे! नाम्नैव निश्चेयोऽयमर्थः । प्रधानमूलमेव प्रथममुत्पद्यमानं क्रमशः स्थेमानमुपगतं च उपमूलानि जनयतीति मूलानामुत्पत्तिक्रमः ॥

**यज्ञशर्मा—** मूलान्युपमूलानि च आम्रपनसादिषु महत्सु शाखिष्वेव दृश्यन्ते । शालीदूर्वादिषु सस्येषु तु न प्रधानमूलमुपलभ्यते । अपि तु उपमूलान्येव बहूनि बहुधा दृश्यन्ते ? ।

**चन्द्रपालः—** आम, सत्यमुक्तं त्वया । सस्यादिषु प्रधानमूलं क्रमशो निधनमुपयाति । उपमूलैरेवैतानि पोष्यन्ते । महाशाखिनां विषये तु प्रधानमूलैरूपमूलैश्च संभूयैवोपकारः क्रियते ॥

**यज्ञशर्मा—** युज्यते । सखे! अरण्येषु कन्दफलाशनाः महर्षयः तीव्रं तपश्चेरुरिति बहुश इतिहासपुराणादिषु श्रूयते । क एष कन्दो नाम? । व्याख्यातारश्च कन्दमूलयोर्भेदं नावबोधयन्ति । पुन्नागादीनां मूलानि कथं भक्ष्याणि भवेयुः ? ॥

**चन्द्रपालः—** भक्ष्याण्यभक्ष्याणीति च मूलानि द्वेधा वर्तन्ते । तयोर्भक्ष्यस्य मूलस्य 'कन्द' इति व्यवहारः। अत्र भोजनेष्वस्माभिरपि प्रायेणानुदिवसमुपयुज्यमानं मूलकं नाम कन्दो निदर्शनं भवति ॥

**यज्ञसर्मा—** सखे! किमिति? मूलकमिति वा? (विमृश्य) आः, ज्ञातं ज्ञातम् । तथा च भक्ष्याभक्ष्यनियमे सुमन्तुः—

'कूश्माण्डं बृहतीं चैव तरुणीं मूलकं तथा । श्रीफलं च

कलिङ्गं च धात्रीं प्रतिपदादिषु । शिरः कपालमान्त्रं च नख-चर्मतिलानि च । अम्लभामलकं चैव अष्टम्यादिषु वर्जयेत् ॥' इति । अत्र मूलकमित्युपात्तम् ॥

**चन्द्रपालः**—कूश्माण्डादीन् प्रतिपदादिषु, शिरःकपालादीनष्टम्यादिषु च वर्जयेत् इति पूर्वोदितस्मृतिवाक्येन प्रतिषिद्धादन्येषु कालेषु मूलकादीनां भक्षणे न दोष इति गम्यते । अभिजनवन्तश्च सर्वथा ब्राह्मणस्याभोज्यानेतान् मन्यन्ते । तत् कुत एतत् संघटताम् ? ॥

**यज्ञशर्मा**— (विहस्य) आः, एवमेव पाश्चात्यपण्डितानां युक्तिचातुरी बहुत्र प्रभवन्त्यपि क्वचित् क्वचित् प्रमाद्यति । तत्रेदमेकं निदर्शनं मन्ये ॥

**चन्द्रपालः**— अहमपि तेषां प्रमादमङ्गीकरोमि । न हि सर्वः सर्वत्र न प्रमाद्यतीति । ब्रूहि, कथमत्र समाधीयते शास्त्रज्ञैः? ॥

**यज्ञशर्मा**— शृणु, सखे! सर्वथा निषिद्धानामपि मूलकादीनामत्र पुनर्विशिष्य निषेधः एतासु तिथिषु भक्षणे दोषाधिक्यप्रदर्शनार्थः । यथा, 'आहिताग्निर्नानृतं वदेत्' इति निषेधवाक्येन आहिताग्नेरनृतवादो निषिध्यते । नह्येतावता अनाहिताग्नेरनृतवाद अङ्गीकृतः । परं तु अनृतवादे अनाहिताग्नेर्यावान् दोषः तदपेक्षया आहिताग्नेरधिको दोषः इति ॥

**चन्द्रपालः**— वयस्य! दुरवगाहः शास्त्रार्थविचारः ॥

**यज्ञशर्मा**— सखे! कन्दानधिकृत्य बहवो विषयाः प्रष्टव्या वर्तन्ते । तत् किमेतेनाभक्ष्यकन्दनामोत्कीर्तनेन? मनसा वा पुनः

पुनः स्मरणेन? । निन्दितनामोत्कीर्तने स्मरणे वा पुरुषस्य पातकमभिलषन्ति स्मर्तारः । तत् भक्ष्येषु कंचन कन्दमुदाहर ॥

चन्द्रपालः— अरे महावैदिकोऽसि । किमग्निरित्युक्ते जिह्वा दह्यते? । अथवा 'मान्यास्ते न विचारणीयवचनाः' (इत्यर्धोक्ते विरम्य) सखे! अपि जानासि वल्लीकन्दम्? यो हि अत्यन्तं स्वादू रसनायाः ॥

यज्ञशर्मा— आम्, स्मर्यते, बहुशो दृष्टचर एवायं कन्दः ॥

चन्द्रपालः— अनेन कन्देन सनाथा वल्ली युष्मद्गृहोपकण्ठकेदारेषु रोपिता दृश्यते ॥

यज्ञशर्मा— अनुदिवसमुपभुज्यत मयाऽयं कन्दः ॥

चन्द्रपालः— सखे! तर्हि भक्ष्येष्वेकतम एवाऽयं कन्द इत्यत्र न कापि विप्रतिपत्तिः ॥

यज्ञशर्मा— वयस्य! आम्रादीनां महतां शाखिनामपि मूलमेतावत्परिमाणं न भवति । अस्या लतायास्तु पत्राणि द्वित्राण्येव सन्ति । मूलंतु महत् भवति । किमत्र निदानम्? ॥

चन्द्रपालः— मित्र! वृक्षाणामाहारसंपादनशक्तिः प्रकाण्डशाखादिष्वेव निहिता । अतस्ते परिमाणेन महान्त उपलभ्यन्ते । मूलं तु तेषां केवलं जलानयनार्थमापादितम् । अल्पतरप्रकाण्डाया लतायास्तु आहारसंपादनशक्तिः मूलेष्वेव निहिता । लतासंवर्धने यावत् द्रव्यमपेक्षितं ततोऽप्यधिकतया मूलान्येतानि संचिन्वन्ति । अत एव कन्दस्य कश्चन अंशः भक्षणायास्माभिरुपयुज्यमानोऽपि लताया हानिं न जनयति । अनेनैव कारणेन एते कन्दाः महत्तरा वर्तन्ते ॥ (क्रमशः ।)

# उपदेशसूक्तिमाला ॥

---

अनारम्भो मनुष्याणां प्रथमं बुद्धिलक्षणम् ।
आरब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम् ॥

प्रयासेन साध्यं किंचित्कर्म प्रारब्धुमिच्छन् मेधावी पुरुषः प्रथमं स्वस्य तन्निर्वर्तने शक्तिं पर्यालोचयति । तथा पर्यालोचने क्रियमाणे यत्र कर्मणि स्वस्य शक्तिमसदृशीं वीक्षेत, संशयो वा यत्र जायते, तत्कर्म मेधावी न प्रारभते । अथ यदि पुनः प्रयाससाध्यं कर्मारभते तच्च न जहात्याफलदर्शनात् ॥ २७ ॥

उदरस्य,

द्वौ भागौ पूरयेदन्नैर्भागमेकं जलेन च ।
वायोः संचरणार्थं च चतुर्थमवशेषयेत् ॥

आकण्ठमुदरस्य विवरमन्नेन यदि पूर्यते, तदा प्रथममुच्छ्वासनिश्वासौ प्रतिरुद्धगती भवेताम् । ततः पुरुषस्य कायिके वाचिके मानसिके च व्यापारे अप्रमत्तता हीयेत । अथ च प्रतिहतेन प्राणवायोः संचारेण जाठरोऽग्निः भुक्तमन्नं सम्यक् पक्तुम्, अन्नस्य भागानुत्तमाधमान् वेवेक्तुं च न समर्थो भवति । तेन च पुरुषस्य रोगबीजमुक्तं संपद्यते । अतो मितं भुञ्जीत ॥ २८ ॥

अस्माभिरद्यमानानि द्रव्याणि द्विविधानि, कठिनानि द्रवद्रव्याणि च । द्रवद्रव्याणि पुनः जलमयानि, घृततैलादीनि च ।

सर्वेषामेतेषां त्रयोंऽशा भवन्ति-- स्थविष्ठाः, मध्यमाः, अणिष्ठाश्चेति । एतांश्च भागान् जाठरोऽग्निः समानेन वायुना प्रेरितः सन् कुक्षिगतान्नस्य पचनकाले विभजति पृथक् पृथक् । तेषु स्थूलतमान् भागान् मलमूत्रादिना परिणतान् अपानो वायुः शरीरात् बहिर्निरस्यति । मध्यमान् भागान् मांसशोणितादिना परिणतान् व्यानो वायुर्हृदयदेशं प्रापय्य शरीरस्य सर्वाङ्गेषु नाड्यादिषु नयति । अणुतमाः तृतीया भागा मनसः प्राणस्य वागिन्द्रियस्य च उपचयकराः संपद्यन्ते । अत्र घृततैलादीनि तेजोमयानि । 'अन्नमयं हि सोम्य मनः, आपोमयः प्राणः, तेजोमयी वाक्' । हे सोम्य! सोमवत् प्रियदर्शनेति श्वेतकेतुरत्र पित्रा संबोध्यते । सात्विकस्यान्नस्य भोजने मनसः सत्वगुणशुद्धिर्भवेत् । सत्वशुध्द्या च ज्ञानस्य विकासः पुरुषस्य भवेत् । अतः रजसस्तमसश्च वा उद्रेककरमन्नं सर्वथा परित्याज्यं ज्ञानविकासेच्छुभिः ॥ २९ ॥

शरीरस्यान्तः पञ्च प्राणाः सन्ति । 'प्राणोऽपानः समानश्चोदानव्यानौ च वायवः' ॥ हृदयदेशे प्राणस्तिष्ठन् उच्छ्वासनिश्वासयोर्हेतुर्भवति । अपानो वायुः गुदद्वारेण शरीरान्तर्जायमानं मलं मूत्रं च बहिरतिसृजति । समानो वायुः नाभिप्रदेशे स्थित्वा जाठरमग्निं भुक्तस्यान्नस्य पचने प्रेरयति । व्यानस्तु अन्नरसान् मांसशोणितादीन् नाड्यादिषु नयति ॥ ३० ॥

लोके पञ्च भूतानि विद्यन्ते 'भूमिरापोऽनलः खं वायुः' इति ।

(१) यत्र सुरभिमसुरभिं वा गन्धमुपलभामहे सा पृथिवी ।

क्वचित् पाषाणादौ झटिति गन्धं न जिघ्रामः, परीक्षायां

तु गन्धस्तत्राप्युद्भवति । यतः पाषाणस्य चूर्णने सति गन्धः स्पष्टमुपघ्रायते । अतो निश्चिनुमः अचूर्णितेऽपि पाषाणे गन्धो मग्नो वर्तत एवेति । पुष्परसादौ गृह्यमाणो गन्धः तत्र गन्धवतां पुष्परजसां सन्निधानेन रसादिजलस्थ इव प्रतिभाति । यथा जपाकुसुमस्य सन्निधानेन श्वेतवर्णं स्फटिकं रक्तवर्णमिव दृश्यते, तद्वत् ॥

(२) शीतस्पर्शवत्य आपः, एतेन ह्यसाधारणेन शीतस्पर्शेन आपः इतरेभ्यो भूतेभ्यः पृथक् क्रियन्ते । षट्सु रसेषु मधुर एव रसः शुद्धे जले वर्तते । पार्थिवस्यांशैः मिश्रिते तु जले कटुकषायतिक्तादीन् रसयामः । पार्थिवांशानां पृथक् करणे तु ते रसास्तत्र नोपलभ्यन्ते ॥

(३) प्रकाशात्मा उष्णस्वभाव अनलः, तस्मिन् जलांशैः पृथिव्यंशैर्वा सन्निहितैः प्रकाशस्तिरोहितो भवति । यथा तप्ते जले स्पर्शेनोपलभ्यमानमपि तेजः प्रकाशं न दर्शयति ॥

(४) वायौ संचरति सति स्पर्शमात्रमनुभवामः । स च स्पर्शः न शीतः नाप्युष्णः । परं तु उभयविलक्षणः । यद्यपि गन्धवतो द्रव्यस्य सन्निधौ वायौ गन्धमनुभवामः, अथापि स गन्धः न वायोः । परं तु वायुना हृतेषु पुष्परजःसु स गन्धो वर्तते । न तु वायावेव । दूरतो गमने तदनुपलम्भात् । रूपं च वायोर्नास्ति । अतः रूपरहितः अनुष्णाशीतस्वभावो वायुः ॥

(क्रमशः ।)

## देशवृत्त

RNAL

### ॥ पञ्चनदक्षेत्रे विद्याविका

इयं च सभा पञ्चनदस्थसंस्कृतपाठशालायां वर्तमाना चिराय पदेपदे वर्धिष्णुभावं भजन्त्यपि मध्ये केनापि कारणेन, कुण्ठितेव, अनुल्लासेव, सद्विरहिणीव, परिवनितेव कृशा, जीवितमात्रशेषा च समभूत्। समनन्तरं श्रीमता श्रीनिवासमाधवाचार्याणां साहाय्यकेन कालानुकूल्येन च पण्डितानां विशेषोद्यमेन विकासभासुरां स्थितिं प्राप्यमाना प्रायेण कार्श्यमुक्ता बाल गृह्णती कलाविशेषं शिक्षमाणा च उक्तिचातुर्यमप्रतिमशोभाविशेषेण प्र वारं वर्धते॥

तादृश्याश्च विद्याविकासिन्या ऐषमो दशमी प्रवृत्तिः मकरमासष्टाविंशे (१९१०. पिब्रवरिमासे नवमे) दिने समभिलत्। यस्यां च पण्डितप्रणयिनः श्रीमन्तः विद्यानिधिविरुदभाजः श्रीकृष्णमाचार्याः अग्र्यमासनमध्यासत। तत्रोदित्वराश्च विषया अधःप्रदर्शिताः—

(१) निरुपमः श्रीशैलाचार्यकृतः अग्र्यासनानुमोदनप्रकारः। (२) रमणीयो मण्ङ्गलपाठः। (३) स्पृहणीयतममुपन्यासलेखनानुवाचनम्। (४) आस्वाद्या खङ्गा। (५) अभिनन्दनीयमुक्तिप्रत्युक्तिचातुर्यम्। (६) अनिमेषनिषेवणीयः शाकुन्तलाभिनयः। (७) मनोहरः श्यामलादण्डकपाठः। (८) पावनाः पूर्णप्रमाणश्च सभ्यानामाशयावेदनफक्किकाः। (९) सर्वास्वाद्यतममग्रासनाधिपतीनामाशयलेखनम्॥ इति अमीषां श्रवणेनापारसुधासागरमग्ना इव अन्येऽपि सभ्याः निरुपमानन्दमन्वभूवन्। विशिष्य नारायणस्वामिनामको बालः अग्रासनाधिपतिना पारितोषिकदानेन प्रोत्साहितः॥

इत्थमेव परुत् प्रचलितायां नवम्यां प्रवृत्तौ इमे एव विषयाः तदा समागत्य अग्रासनमलंकृतवतः सूप्रेण्टेण्ट्विरुदधारिणः ब्रह्मश्री कृष्णमाचार्यान् प्रीणयन्तिस्म। इतरदुरवापाचायमस्याः सौभाग्यसंपत्परिपाटीति कथं न निश्चिनोमि। क्व तादृशा महान्तः? क्वचेयं सभा? सर्वथा रमणीयं वस्तु कं कं वा नावर्जयेत्॥

इति सहृदयवशंवदः शेषशायी।

तु गन्धस्तत्राप्युद्भवति
गन्धः स्पष्टमुपल
पाषाणे ग
गन्धः त
इव प्र
स्प



THE

# SANSKRIT JOURNAL

OR

# ॥ सहृदया ॥



VOL. XIV.

NO. 11.

EDITOR R. KRISHNAMACHARIAR, M. A.

## CONTENTS.



PRINTED AT THE SRI VANI VILAS PRESS, SRIRANGAM.

PUBLISHED AT MADRAS.

Registered No. M. 103.

# विषयाः ।



# Sahridaya.

1. Sahridaya is intended to serve as a common platform where the Sanskrit scholars of the old and the new type may meet and exchange their thoughts through the medium of Sanskrit—the only language which is common to the pandits throughout India and which lends itself admirably for giving the pandits ignorant of English an idea of the critical and historical method of study inaugurated by European savants.

2. With a view to graft the Western method of study on the Eastern, choice dissertations in simple Sanskrit prose on the researches of Western scholars as well as the wonderful achievements of science will be regularly published in the Journal besides a few short interesting novels.

3. The last forme of every issue is devoted to publishing rare and useful works.

4. The publication of the Journal is a pure labour of love and as such we earnestly solicit the sympathy and co-operation of all lovers of Sanskrit.

5. Literary contributions may be addressed to the Editor and all business communications to the Manager, Sahridaya office, Puraswaukum, Madras (N. C.).

6. Annual subscription is Rs. 3 only, including postage.

॥ श्रीः ॥

# ॥ सहृदया ॥



सरसचारुपदक्रमभासुरा विपुलभावविलासमनोहरा ।
सहृदया हृदयालुभिराद्दता प्रतिकलं परिपोषमुपैष्यति ॥

संपु. २.] सौम्यवर्ष माघमासः । [संचि. ११.

## सुभाषितानि ।

लक्ष्मीसंपर्कजातोऽयं दोषः पद्मस्य निश्चितम् ।
यदेष गुणसंदोहधाम्नि चन्द्रे पराङ्मुखः ॥ १ ॥

कलानिधिरयं रवेः समुपलभ्य रूपं स्वयं
दिनान्तसमयेऽस्पृशत्सपदि पद्मिनीं रागवान् ।
धवान्यकरसंगमान्मुकुलितेति पूर्वाकृतिं
समीक्ष्य जहसुः प्रिया ध्रुवमभूदतः पाण्डरः ॥ २ ॥

नवकुमुदवनश्रीहासकेलिप्रसङ्गा-
दधिकरुचिरशेषामप्युषां जागरित्वा ।
अयमपरदिशोऽङ्के मुञ्चति स्रस्तहस्तः
शिशयिषुरिव पाण्डुम्लानमात्मानमिन्दुः ॥ ३ ॥

॥ श्रीः ॥

# मेघसंदेशविमर्शः ॥

## द्वितीय आश्वासः ।

---

विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
संगीताय प्रहतमुरवाः स्निग्धपर्जन्यघोषम् ॥
अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥ १ ॥

एवं मानसं सरोवरमवगाह्य चैत्ररथमुपवनं यथाकाममुपभुज्य अलकां प्रविष्टस्य रसिकजनमौलेर्भवतः प्रथममेव लोचनपथमुपयाताः अभ्रंलिहाग्राः प्रासादाः, सरसविलासपेशलाभिर्वनिताभिः, कमनीयविविधवर्णसंक्रान्तिदर्शनीयैः चित्रैः, हृदयावर्जकैः मधुरमधुरैः संगीतनादैः, प्रभातरलाभिः स्निग्धेन्द्रनीलमरकतादिमणिमयभूमिभिः सर्वथा भवन्तमेवानुकुर्वन्तः, ‘नगर्यामस्यामचेतनानामपि रासिक्यमीदृशं चेत् किमिव हि भवेत् नितान्तधन्यानामधिगतकलाकलापानां नगरमिदमधिवसतां यक्षमिथुनानाम्’ इति कौतूहलमसंशयं जनयेयुः प्रेक्षकाणां मनसि, इति द्योतयन्, ‘सखे जलद! भोगभूमावस्यां प्रियाविधुराणामवकाशो न दीयेत, अतस्त्वया सह विद्युतैव प्रवेष्टव्यम्’ इत्यादावेव निपुणमुपदिशति यक्षः ॥

अत्र यथैव जलदोदरसंधिलीनया सौदामिन्या समुपेतः पर्जन्यः दर्शनीयतरः भवति, तथैव रसिकजनरसायनमिदं काव्यम्

अन्यादृशीं सुषमामापादयतोत्तरमेघेन रसवत्तरमाभातीति ध्वनयन्, 'विद्युत्वन्तम्' इत्यारभ्य श्रोत्रपेयमिमं भागं 'मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः,' इत्यवसाययन् उपक्रमोपसंहारवैखरीमन्यादृशीमाविष्करोति महाकविरिति मन्यामहे ॥

हस्ते लीलाकमलमलके बालकुन्दानुविद्धा
नीता लोध्रप्रसवरजसा पाण्डुतामाननश्रीः ॥
चूडापाशे नवकुरवकं चारु कर्णे शिरीषं
सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् ॥ २ ॥

पूर्वस्मिन् पद्ये प्रथमं निर्दिष्टानां ललितवनितानां सौभाग्यातिशयमिह संकल्पस्य विषयीकुर्वन् नायकः 'भोः किमर्थमेवं सह विद्युतैव प्रवेष्टव्येयमलकेति निर्बन्धः क्रियते? न मे किंचिदिह तथा प्रविष्टस्य प्रयोजनमस्ति; अपि चेयं सौदामनी नितान्तचञ्चला मदीयामभ्यर्थनामप्यवधीर्य 'नाहमनुगच्छेयं त्वामन्यार्थे यतमानम्' इति कुत्रचिल्लीना भवेत्' इति मेघस्य विचिकित्सा स्यादिति स्वयमेवोत्प्रेक्ष्य, कुसुमसधर्माण इमा योषितः नानाविधैः प्रसूनैरात्मानं मण्डयन्त्यो भवन्तमादरातिशयेनोपतिष्ठेरन्; तदानीं ताः यथोचितं संभावयितुं नास्ति चेन्निकटे त्वदीया सहधर्मिणी तर्हि त्वामरसिक इति मन्येरन्निमाः यक्षललनाः' इति सूचयन् ललितललितानां लावण्येनातिशयिततटिल्लतानामेतासां भवति बहुमानं दृष्ट्वा स्वयमेव लज्जिता शिक्षिता च समीचीनां सरणिं नियतमात्मनश्चञ्चलां प्रकृतिं परित्यजेत् विद्युदपि' इति द्योतयन्, अनुत्तमसौकुमार्यवतीः ताः समवलोक्य 'यक्षेण मे महदुपकृतमित्यपि संभावना भवेत्तव मनसि' इति च ध्वनयन् सहृदयान् रसयति ॥

**यस्यां यक्षाः सितमणिमयान्येत्य हर्म्यस्थलानि**
**ज्योतिश्छायाकुसुमखचितान्युत्तमस्त्रीसहायाः ।**
**आसेवन्ते मधु रतिफलं कल्पवृक्षप्रसूतिं**
**त्वद्गम्भीरध्वनिषु शनकैः पुष्करेष्वाहतेषु ॥ ३ ॥**

उत्तमस्त्रीणां प्रस्तावेन तासां सह प्रियतमैः प्रासादेषु भोगानुसेवनप्रकारादिकमनुसारितो यक्षः 'हर्म्येष्वस्याः कुसुमसुरभिषु' इत्युज्जयिनीनिरूपणावसरे स्वोक्तस्याशयमिह सम्यग्विवृण्वन्, मणिमयभुवां प्रासादानां संनिवेशरामणीयकोपन्यासमुखेन यक्षमिथुनानाम् उद्दामान्युन्मादकारीणि च यौवनानि प्रथयन्, संनिवेशरामणीयकेनाङ्कुरितां, मेघस्य स्निग्धगम्भीरघोषश्रवणेन पल्लविताम्, अन्यादृशसुरभिपरिमलस्य मधोः सेवनेन विजृम्भितां भोगतृष्णामनुवर्णयन्, 'विविक्तविस्रम्भरसो हि कामः' इति सूक्तेरर्थमनुसंधापयति ॥

अत्रेदमवधेयम्— महाकविरसौ पूर्वमेघे, प्रथमं 'कान्ताविरहगुरुणा' इत्युपक्षिप्य उत्तरमेघं च 'विद्युत्वन्तम्' इत्यारभते । ततः 'अबलाविप्रयुक्तः स कामी' इति निर्दिश्य इह द्वितीये पद्ये प्रकृष्टसौकुमार्यवतीरबलाः वर्णयति । अनन्तरम् 'अन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ' इति प्रस्तुत्य अत्र तृतीये अन्तर्बाष्पस्यास्य ध्यानविषयीभूतमन्येषां यक्षाणाम् उत्तमस्त्रीसहायानां भोगानुसेवनप्रकारं निर्दिशन् 'मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः' इत्यादिना प्रोक्तमाशयमिह 'आसेवन्ते मधु रतिफलम्' इत्यादिना विशदयतीति मन्यामहे ॥

**नीवीबन्धोच्छ्वसनशिथिलं यत्र बिम्बाधराणां**
**क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु ।**

अर्चिस्तुङ्गानभिमुखमपि प्राप्य रत्नप्रदीपा-
न्ह्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टिः ॥ ४ ॥

'प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी,' इति पूर्वोक्त-माशयमनुसंधाय, बिम्बाधराणां मानिनीनामात्मनः सखीनां यक्षवनितानां प्रियतमैः सह भोगसाम्राज्यलक्ष्मीमनुक्षणमनुभूयमानामनुचिन्त्यानुचिन्त्य नितरां दूयमानमानसायाः वल्लभविरहेण ताम्यन्त्याः प्रेयस्या एकोच्छ्वासावशेषितं जीवितं यक्षेणोत्प्रेक्षितमिह निपुणमुद्गृणाति महाकविः ॥

पद्यस्यास्य व्याख्यानावसरे निरुपममात्मनो रासिक्यमाविष्करोति विद्युल्लता ॥

नेत्रा नीताः सततगतिना यद्विमानाग्रभूमे-
रालेख्यानां नवजलकणैर्दोषमुत्पाद्य सद्यः ।
शङ्कास्पृष्टा इव जलमुचस्त्वादृशा यत्रजालै-
र्धूपोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति ॥ ५ ॥

महाकविः पूर्वमेघे 'धूमज्योतिःसलिलमरुतां संनिपातः' इत्यादिनानुवर्णितं मेघस्य स्वरूपमिहानुसंदधानः, 'नेत्रा नीताः धूपोद्गारानुकृतिनिपुणास्त्वादृशाः' इति निर्दिशन्, मेघसदृशा गम्भीरप्रकृतयः केचन सज्जना अपि दुर्मेधोभिराविष्टाः प्रेरिताश्चावशमपथे प्रवर्तमानाः आलेख्यभित्तिगतानां महापुरुषाणां सावित्रीप्रभृतीनां रमणीमणीनां च प्रतिकृतिदर्शनेन स्वकीयां प्रकृतिमनुसारिताः शङ्कास्पृष्टाः स्वेदजलक्लिन्नगात्रयष्टयः जर्जरा बहिर्निष्पतन्तीति बोधयन् 'रजोनिमीलिताः श्रुतवन्तः कदाचिदपथे पदमर्पयन्तोऽपि प्रा-

येणात्मनः स्खालित्यमनुपदमेवावगच्छन्तः स्वीयां प्रकृतिं प्रपद्यन्ते' इत्यादि बहूपदिशति लोकस्य ॥

अत्र च गूढपुरुषैः रहस्यभूमिं प्रापितानां क्षुद्रमार्गैर्निष्क्रामतां जाराणामितिवृत्तमिहोत्पश्यन्ती संजीविनी अत्युदारचरिताय महावंशोत्पन्नाय वलाहकाय द्रुह्यतीति किंचिदिव विमनीभवामः ॥

यत्र स्त्रीणां प्रियतमभुजोच्छ्वासितालिङ्गिताना-
मङ्गग्लानिं सुरतजनितां तन्तुजालावलम्बाः ।
त्वत्संरोधापगमविशदैश्चन्द्रपादैर्निशीथे
व्यालुम्पन्ति स्फुटजललवस्यन्दिनश्चन्द्रकान्ताः ॥ ६ ॥

'दूरबन्धुर्गतोऽहम्' इति यक्षोक्तिमनुस्मारयन् अन्योन्याश्लेषसुखितानां यक्षमिथुनानां रमणीयां स्थितिमिह नायकमुखेन वर्णयन् महाकविः, 'न केवलमहिंसा परमो धर्मः; परं तु अन्येषां सुखानुभवस्य न कदाप्युपरोधः साक्षात् परम्परया वा करणीयो विवेकिभिर्धर्मसूक्ष्मतां जानद्भिः विलासिजनैः' इत्युपदिशति ॥

नगर्यामस्यां कामिनीभिः सकृदेव प्रियतमाः व्रियन्ते । 'प्रियतम एव हि वरणीयो भवति'। तेषां च मिथुनानां प्रतिक्षणमेधमानानुरागकल्लोलितान्तरङ्गाणाम् अन्योन्यविलासविभ्रमानुभवेषु न कदाप्यलंबुद्धिरुपजायते । अपरैः विलासिजनैः धूर्ताविटैर्गूढमुपरुद्धा अपि इमा मानिन्यः न कदाप्यपथे मतिं प्रवर्तयन्ति । हठाभिसरणप्रवृत्तानामपि प्रयत्नः तासु निरर्थकः परिभवफलः केवलं संरोध एव पर्यवस्यति' इत्यहो! दांपत्यमन्यादृशममरमिथुनानामिमां पुरीमधिवसताम् ॥

मत्वा देवं धनपतिसखं यत्र साक्षाद्वसन्तं
प्रायश्चापं न वहति भयान्मन्मथः षट्पदज्यम् ॥
सभ्रूभङ्गप्रहितनयनैः कामिलक्ष्येष्वमोघै-
स्तस्यारम्भश्चतुरवनिताविभ्रमैरेव सिद्धः ॥ ६ ॥

पूर्वम् 'धनपतिक्रोधविश्लेषितस्य' इत्युक्तं यक्षवचनमनुस्मारयन्निह महाकविः, 'अविज्ञातसौकुमार्यवृत्तान्तः अगणितापरोपतापः रसिकजनशत्रुः किलासौ धनपतिः; तस्य सखाऽयं पशुपतिर्विषमलोचनः स्मरहरः; द्वयोरपि सांनिध्येन भीतभीतः कुसुमेषुः कृच्छ्रादिमं प्रदेशमुपतिष्ठति; अथापि अनुत्तमलावण्यवतीनाममरवनितानां विभ्रमविलासादिभिः स्पृहणीयावासमिदं नगरं विरागिणामपि रागमुपजनयतीत्यत्र मनोभवविरोधिनं वशिनामुत्तमं संयमीन्द्रं शूलिनमपि विलासविभ्रमैरावर्जितवती मानिनीमणिः देवी भवान्येव दृष्टान्तायते, इति ध्वनयन्, 'तां वीक्ष्य सर्वावयवानवद्यां रतेरपि ह्रीपदमादधानां । जितेन्द्रिये शूलिनि पुष्पचापः स्वकार्यसिद्धिं पुनराशशंसे ॥' इत्यन्यत्र श्रूयमाणामात्मनः सूक्तिं स्मरणपथमारोपयन् सहृदयान् रसयति ॥

तत्रागारं धनपतिगृहानुत्तरेणास्मदीयं
दूराल्लक्ष्यं त्वदमरधनुश्चारुणा तोरणेन ।
यस्योद्याने कृतकतनयः कान्तया वर्धितो मे
हस्तप्राप्यस्तबकनमितो बालमन्दारवृक्षः ॥ ८ ॥

पूर्वम् 'त्वामारूढं पवनपदवीम्' इत्यादिना गगनाङ्गणमारोपितं पर्जन्यमिहादावात्मनो गृहोपकण्ठोद्यानाङ्गणे सरसमवतारयन्,

'त्वदमरधनुश्चारुणा' इत्यनेन मेघस्य मनसि महान्तं कौतुकमुपजनयन् यक्षः, संनद्धेऽपि मेघे विरहविधुरां पराधीनवृत्तिना आत्मनोपेक्षितां प्रेयसीमनुशोचन्, 'समयेऽस्मिन् मानिनीनाम् मरणमेव जीवितं, जीवितं पुनर्मरणम्' अथापि आधारबन्धप्रमुखैः प्रयत्नैः सुतनिर्विशेषं संवर्धितस्य स्नेहसर्वस्वभूतस्य बालमन्दारवृक्षस्य कृते कृच्छ्रात् प्राणधारणं कुर्यादियम्; इति निश्चिन्वन्, तमेव बालमन्दारम् अभिज्ञानत्वेन कण्ठतो निर्दिशन्, अस्मिन्नेव शैले 'अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन । यो हेमकुम्भस्तननिःसृतानां स्कन्दस्य मातुः पयसां रसज्ञः ॥' इत्यन्यत्र महाकविना उपवर्णितं देवदारुं स्मारयति ॥

पद्यमिदमनुध्यायतामस्माकं पुण्डरीकविनाशश्रवणानुक्षणमेवोन्मुक्तजीवितं प्रेयांसं चन्द्रापीडमनुसर्तुमुद्यतायाः 'पुत्रकस्य मे भवनाङ्गणे सहकारपोतस्य त्वया मच्चिन्तयैव माधवीलतया सह उद्वाहमङ्गलं स्वयमेव निर्वर्तनीयम्; मच्चरणतललालितस्याशोकविटपस्य कर्णपूरार्थमपि न पल्लवः खण्डनीयः; मत्संवर्धितायाः मालत्याः कुसुमानि देवतार्चनायैवोच्चेयानि; मया स्वयं रोपिताश्चूतवृक्षाः यथा फलं गृह्णन्ति तथा संवर्धनीयाः' इति मदलेखामभिदधानायाः कादम्बर्या भाषितं हृदयगह्वरमापूरयति ॥

(क्रमशः)

---

# चन्द्रापीडचरितम् ।

अथ तयोः निमज्जनसमयानन्तरमेव तस्मात् सरःसलिलादुद्विग्नाकृतिः तापसकुमारः सहसैवोदतिष्ठत् । उत्थाय च दूरत एव विलोकयन्तीं महाश्वेतामुपसृत्य बभाषे। 'गन्धर्वराजपुत्रि! जन्मान्तरागतोऽपि प्रत्यभिज्ञायतेऽयं जनो न वा' इति । सा त्वेवं पृष्टा शोकानन्दमध्यवर्तिनी ससंभ्रममुत्थाय कृतपादवन्दना प्रत्यवादीत् । 'भगवन् कपिञ्जल! नाहमेवंविधा अपुण्यवती । या भवन्तमपि न प्रत्यभिजानामि । कथय केनासौ देवो भवतः सखा समुत्क्षिप्य नीतः?। कथमेतावता कालेन वार्तापि न दत्ता?। कुतो वा त्वमेकाकी देवेन विना समायातः'? इति । स तु प्रत्यवादीत् । 'गन्धर्वराजपुत्रि, श्रूयताम् । अहं हि कृतार्तप्रलापामपि त्वामेकाकिनीमुत्सृज्य तं पुरुषमनुबध्नन् जवेनोदपतम् । स तु मे प्रतिवचनमदत्त्वैवातिक्रम्य तारागणं चन्द्रलोकमगच्छत् । तत्र च महोदयाख्यायां सभायां इन्दुकान्तमये महति पर्यङ्के तत्पुण्डरीकशरीरं स्थापयित्वा मामवादीत् । कपिञ्जल जानीहि मां चन्द्रमसम् । अहं खल्वनेन ते प्रियवयस्येन निरपराधः संशप्तः । दुरात्मन् इन्दुहतक, यथाहं त्वया करैस्संताप्य प्राणैर्वियोजितः तथा त्वमप्यस्मिन् भारते वर्षे जन्मनि जन्मन्येवोत्पन्नानुरागः अलब्धसमागमसुखः तीव्रतरां हृदयवेदनां अनुभूय जीवितमुत्स्रक्ष्यसीति । अहमपि 'किमनेनागणितात्मदोषेण निरपराधस्संशप्तोऽस्मि' इति संजातरोषः 'त्वमपि मत्तुल्यसुखदुःख एव भविष्यसि' इति प्रतिशापमस्मै प्रायच्छम् । अथ विमृशन् वत्साया महाश्वेताया व्यतिकरमस्याधिगतवानस्मि । अनेन च स्वयंकृतादेव दोषात् मया सह मर्त्यलोके वारद्वयमवश्यमुत्पत्तव्यम् । अन्यथा जन्मनि जन्मनीत्येषा वीप्सैव न चरितार्था भवति । तावदस्य शरीरस्य मा विनाशोभूदिति मयेदमु-

त्क्षिप्य समानीतम् । वत्सा च महाश्वेता समाश्वासिता । अधुना त्वं गत्वैनं वृत्तान्तं श्वेतकेतवे निवेदयेः । महाप्रभावोऽसौ कदाचिदत्र प्रतिक्रियां कांचिदपि कुर्यात् इति । अहं तु विना वयस्येन शोकान्धः गीर्वाणवर्त्मनि प्रधावन् अतिक्रोधनं वैमानिकमेकमलङ्घयम् । स तु मां दहन्निव निरीक्ष्याब्रवीत् । यत् त्वयाहं तुरङ्गमेणेवोल्लङ्घितः तस्मात् तुरङ्गम एव भूत्वा मर्त्यलोकेऽवतरेति । अहं तु तं कृताञ्जलिरवदम् । भगवन् वयस्यशोकान्धेन त्वं मयोल्लङ्घितः नावज्ञया । तत्प्रसीद । उपसंहर शापमिति । स तु मां पुनरवादीत् । यन्मयोक्तं तन्नान्यथा भवितुमर्हति । तदेतत्ते करोमि । कियन्तमपि कालं यस्यैव वाहनतामुपयास्यसि तस्यैवावसाने स्नात्वा विगतशापो भविष्यसीति । एवमुक्तस्तु तमहमवदम् । भगवन्, यद्येवं यथा मे तुरङ्गमत्वेऽपि चन्द्रमसा सह मर्त्यलोके अवतरिष्यता वयस्येन पुण्डरीकेण च सहावियोगो भवेत् तथानुगृह्यताम् इति । स त्वेवमुक्तो मुहूर्तमिव ध्यात्वा पुनर्मामवादीत् । उज्जयिन्यामपत्यहेतोस्तपस्यतः तारापीडस्य राज्ञः चन्द्रमसा तनयत्वमुपगन्तव्यम् । वयस्येनापि ते तन्मन्त्रिण एव शुकनासस्य । त्वमपि तस्य राजपुत्रस्य वाहनतामुपयास्यसि इति । अहं तु तद्वचनानन्तरमेव महोदधौ न्यपतम् । तस्माच्च तुरङ्गीभूयैवोदातिष्ठम् । अवाप्य च पारसीकाधिपतिं तेन च तारापीडस्योपायनीकृतः चन्द्रापीडस्य वाहनतामुपागच्छम् । योऽसौ चन्द्रापीडः स चन्द्रमसोऽवतारः योऽप्यसौ प्राक्तनानुरागसंस्कारात् अभिलषन्नजानत्या त्वया शापाग्निना निर्दग्धः सोऽपि मे वयस्यपुण्डरीकस्यावतारः' इति ॥

तदाकर्ण्य महाश्वेता 'हा देव पुण्डरीक, जन्मान्तरेऽप्यविस्मृ-

तमदनुराग, लोकान्तरगतस्यापि तेऽहमेव राक्षसी विनाशायोपजाता' इत्युन्मुक्तार्तनादा सोरस्ताडनमात्मानमवनावपातयत् । कपिञ्जलस्तु तथा कृतप्रलापां तां प्रत्यवादीत् । 'गन्धर्वराजपुत्रि, कस्तवात्र दोषः ?। यथा च शापदोषात् भवत्योर्द्वयोरपि दुःखं तथा मया कथितमेव । चन्द्रमसोऽपि भारती भवतीभ्यां श्रुतैव । तदुन्मुच्यतामयं शोकानुबन्धः । यदेवारब्धं तपस्तदेवानुबध्यताम्' इति । अथ कादम्बरी कपिञ्जलमवादीत् । भगवन् पत्रलेखया त्वया चास्मिन् सरसि जलप्रवेशः कृतः । तत्किं तस्याः पत्रलेखायास्संवृत्तमिति । स तु प्रत्यवादीत् । राजपुत्रि, सलिलपातानन्तरं न कश्चिदपि तद्वृत्तान्तो मया ज्ञातः । तदधुना क चन्द्रापीडस्य क वैशम्पायनस्य जन्म ? । किं वास्याः पत्रलेखाया वृत्तम् ? इति सर्वस्यास्य वृत्तान्तस्यावगमनाय भगवतः श्वेतकेतोः पादमूलं गमिष्यामि । इत्यभिदधान एव गगनमुदपतत् । अथ कादम्बरी तामखेदार्हां चन्द्रापीडतनुं कस्मिंश्चित् शिलातले शनैः स्थापयित्वा स्नानशुचिर्भूत्वा देवतोचितामपचितिं संपाद्य सकलेन परिजनेन सह निराहारा कालमक्षिपत् । अथ मदलेखा विदितवृत्तान्ताभ्यां पितृभ्याम् 'अवसितशापेन जामात्रा सहैव वत्सां द्रक्ष्यावः' इति सन्दिष्टा सा कादम्बरी निर्विकारवदनं चन्द्रापीडशरीरमेवाहर्निशमन्वपालयत् । अथ चन्द्रापीडश्चिरयतीत्युत्ताम्यन् देवस्तारापीडः तद्वार्तावबोधनाय वार्ताहरान् प्रेषयामास ॥

अथ प्रतिनिवृत्तेभ्यस्तेभ्यः सर्वमपि तं वृत्तान्तं यथावदश्रौषीत् । श्रुत्वा च विस्मयशोकाभ्यामाक्षिप्तहृदयं तं शुकनासः प्रोवाच । देव, विचित्रेऽस्मिन् संसारे किं किं न संभाव्यते । श्रूयन्ते च पुराणरामायणभारतादिष्वागमेषु बहुप्रकाराश्शापवार्ताः । तद्यथा—महेन्द्र-

पदवर्तिनो नहुषस्य राजर्षेरगस्त्यशापादजगरता । सौदासस्य च वसिष्ठसुतशापान्मानुषादत्वम् । असुरगुरुशापाच्च ययातेस्तारुण्य एव जरसा भङ्गः । त्रिशङ्कोश्च पितृशापाच्चण्डालभावः इत्यादि । श्रूयते च स्वर्गनिवासी महाभिषो नाम राजा अस्मिन् लोके शन्तनुरुत्पन्नः । तत्पत्नीत्वमुपगतायां गङ्गायां शापदोषादष्टानामपि वसूनामुत्पत्तिः । तिष्ठतु तावदन्ये । अयमादिदेवो भगवानज एव जमदग्नेरात्मजतामुपगतः, पुनश्चतुर्धात्मानं विभज्य राजर्षे र्दशरथस्य, तथैव मथुरायां वसुदेवस्य । तन्मनुष्येषु देवानामुत्पत्तिर्नैवासंभाविनी । अपि च गर्भारम्भसंभवे देवेन देव्या वदने विशंश्चन्द्रमा एव दृष्टः, तथा ममापि स्वप्ने पुण्डरीकस्य दर्शनं समुपजातम् । तदस्मिन् वस्तुनि न मनागपि देवेन शोकः कार्यः । इत्युक्तवति शुकनासे विस्मयान्तरितशोकावेगस्तारापीडः सद्य एव गमनसंविधानमकारयत् । प्रस्थितश्च तद्विस्मयालोकनकुतूहलिन्या गृहवर्जमुज्जयिन्यानुगम्यमानः कतिपयैरेव दिवसैर्महाश्वेताश्रममाससाद । महाश्वेता तु तदागमनमाकर्ण्य सरभसं धावित्वा ह्रिया गुहान्तरमविशत् ॥

कादम्बरी तु कथंचिद्विधृतप्रज्ञा लज्जावनम्रमुखी यथाक्रमं गुरुवन्दनमकरोत् । तत्र चन्द्रापीडशरीरसंदर्शनक्षुभितहृदयेषु तेषु पौरेषु सर्वतः प्रवृत्तरोदनशब्दं तत्तपोवनं शोकाधिष्ठानसदनमिवाभवत् । नरपतिस्तु वन्यां वृत्तिमेवावलम्ब्य सपरिवारस्समं देव्या शुकनासेन च तत्रैव तपोवनैकदेशे मृत्युंजयध्यानपरः कालमयापयत् । इत्युक्त्वा स भगवान् जाबालिः 'अहो कथारसस्य चित्ताक्षेपसामर्थ्यम् । यत्कथयितुं प्रवृत्तोऽस्मि तत्परित्यज्यैवातिदूरमतिक्रान्तोऽस्मि । यः कामोपहतचेताः स्वयंकृ-

तादेवाविनयात् दिव्यलोकतः परिभ्रश्य मर्त्यलोके वैशम्पायननामा शुकनाससूनुरभवत् स एवैष पुनर्महाश्वेताशापेन शुकजातौ पतित इत्युक्त्वा विरराम ॥

इत्येवं वदत्येव भगवति जाबालौ सुप्तप्रबुद्धस्येव मे पूर्वजन्मोपार्जिताः सर्वा विद्या जिह्वाग्रे अस्फुरन् । मनुजस्येव चेयं विस्पष्टा भारती समुत्पन्ना । मनुष्यशरीरादृते स एव चन्द्रापीडस्योपरि स्नेहः स एव महाश्वेतायामनुरागः इति सर्वमपि जन्मान्तरीयं मद्धृदयमविशत् । भगवान् जाबालिस्तु दिक्षु विक्षिपन् चक्षुः 'अहो प्रभातप्राया रजनी' इत्यभिदधान एव गोष्ठीं भङ्क्त्वोदतिष्ठत् । हारीतस्तु मां निजकरेणैवात्मपर्णशालां नीत्वा शनैः स्वशयनैकदेशे स्थापयित्वा प्राभातिकक्रियाकरणाय निर्ययौ । कपिञ्जलस्तु मम पितुः श्वेतकेतोः पादमूलादागत्य स्नातागतेन हारीतेन प्रवेशितः निर्निमेषेण चक्षुषा मां निरीक्ष्य करद्वयेनोत्क्षिप्य वक्षसि निवेश्य भूयसा मन्युवेगेन चिरमरोदीत् । तथा रुदन्तं तु तं दृष्ट्वाहमवदम् । सखे कपिञ्जल, किं फलमनेन सकलक्लेशपरिभूते मयि दुरात्मनि स्नेहानुबन्धेन ? त्वं पुनर्बालोऽपि न स्पृष्ट एवामीभिस्संसारदोषैः । समुपविश्य तावत्कथय यथावृत्तं सर्वम् । अपि कुशलं तातस्य । स्मरति वा माम् । मद्वृत्तान्तमाकर्ण्य किमुक्तवान् ? कुपितो वा नवेति । सोऽब्रवीत् सखे, कुशलं तातस्य । अयं चास्मद्वृत्तान्तः प्रथममेव तातेन दिव्येन चक्षुषा दृष्टः । ततस्तुरगभावाद्विमुक्तो गतोऽस्मि तस्य पादमूलम् । दूरत एव स्थित्वा विषण्णदीनमानसं भयादनुपसर्पन्तं मामाहूयैवमाज्ञापितवान् । वत्स परित्यज्यतां स्वदोषशङ्का । बलवती हि भवितव्यता । शुकजाताविदानीं सुहृत्ते पति-

तः । तद्गत्वापि तमद्य नैव वेत्सि । नाप्यसौ त्वां वेत्ति । मया तु वत्सस्यकृते समारब्धमायुष्करं कर्म । तदत्रैव कंचित्कालं स्थीयतामिति । ततस्तथेति तत्पादपरिचर्ययैव कंचनकालमनैषम् । अद्य प्रातरेव मामाहूयाज्ञापितवान् । वत्स कपिञ्जल महामुनेर्जाबालेराश्रमं सुहृत्ते प्राप्तः । जन्मान्तरस्मरणं चास्योपजातम् । तद्गच्छ संप्रति तं द्रष्टुम् । मदीयया चाशिषानुगृह्य वक्तव्योऽसौ । वत्स, यावदिदं कर्म परिसमाप्यते तावत्त्वयास्मिन्नेव जाबालेराश्रमे स्थातव्यमिति । इत्युक्त्वा कपिञ्जलः क्षणमिव स्थित्वा 'सखे, प्रतिपालय निदेशं तातस्य अहं तु समारब्धकर्मणः तस्यैव प्रत्यनन्तरीभवामीत्यभिदधान एवान्तरिक्षमतिक्रम्यादर्शनमगात् ॥

अथ हारीतेन प्रतिदिनमाहारादिभिरुपचारैः संवर्धितोऽहं कतिपयैरेव दिवसैः संजातपक्षोऽभवम् । उत्पन्नोत्पतनसामर्थ्यश्च चेतस्यकरवम् । 'गमनक्षमस्तु संवृत्तोऽस्मि । तत्किमुत्पन्नज्ञानोऽपि दयितजनविरहेणात्मानं क्लेशयामि ? । भवतु तत्रैव गत्वा तिष्ठामि, यत्र महाश्वेता आस्ते' । इति निश्चित्यैकदा प्रातर्विहारनिर्गत एव उत्तरां ककुभं गृहीत्वावहम् । अपरिचितगमनतया स्तोकमेव गत्वा शिथिलितपक्षतिः कस्यचित्तरोरग्रमवालम्बिषि । तत्रैव किञ्चिद्विश्रम्य पश्चाद्यास्यामीति तस्यैव तरोर्मूलभागमेवावतीर्य अध्वश्रमसुलभां निद्रामगच्छम् । चिरादिव प्रबुद्धस्तन्तुपाशैर्बद्धमात्मानमलक्षयम् । अग्रतश्च क्रूराकृतिं पुरुषमेकमालोक्य तमपृच्छम् । भद्र, कस्त्वम् ? । किमर्थं वाहं बद्धोऽस्मीति । स तु मामुक्तवान् । महात्मन्, अहं खलु जात्या चण्डालः । मम खलु स्वामी पक्कणाधिपतिरितो नातिदूरे कृतावस्थानः । तस्य चैका दुहिता प्रथमे वयसि वर्तते ।

तस्यास्त्वं केनापि दुरात्मना कथितः, यथा जाबालेराश्रमे महाश्चर्यकारी शुकस्तिष्ठतीति। तच्छ्रुत्वा बहवो मादृशास्त्वद्ग्रहणाय तया समादिष्टाः । तदद्य पुण्यैर्मया त्वमासादितोऽसि । बन्धे मोक्षे चाधुना सैव प्रभवतीति । अहं तु तच्छ्रुत्वा चेतस्यकरवम् । अहो मे दारुणः कर्मविपाकः । येन मया जगत्त्रयनमस्यस्य श्वेतकेतोः स्वहस्तसंवर्धितेन दिव्यलोकवासिना भूत्वा अधुना पक्कणमपि प्रवेष्टव्यम् । चाण्डालैस्सहैकत्र स्थातव्यम् । मातङ्गवृद्धाङ्गनाकरोपनीतैः कबलैरात्मा पोषणीयः । चण्डालबालजनस्य क्रीडनीयेन भवितव्यम् । इति चिन्तयन्तमेव मां नीत्वा स तस्यै चाण्डालदारिकायै समर्पितवान् । सा तु प्रहृष्टवदना शोभनं कृतमित्यभिधाय दारुपञ्जरे मामाक्षिप्यार्गलितद्वारा 'अत्रैव निर्वृतस्तिष्ठ' इति मामाबभाषे । अथ महासंकटे पतितोऽस्मीति निर्विण्णहृदयोऽहं मौनग्रहणं कृत्वा तदुपनीतेषु पानाशनादिषु निर्व्यपेक्ष एव कतिपयं कालमयापयम् । अस्मिन् प्रत्युषसि तु प्रबुद्धोऽहं कनकपञ्जरस्थितमात्मानमद्राक्षम् । सद्य एव मामादायैषा देवपादमूलमायाता । तत्केयं ? किमर्थं वाहं बद्धः ? किमर्थमिहानीतः ? इत्यत्र देव इवाहमपि अनपगतकुतूहल एव इति वैशम्पायनो विरराम ॥

राजा तु तच्छ्रुत्वा समुपजाताभ्यधिककुतूहलः चाण्डालकन्यकानयनाय पुरःस्थितां प्रतीहारीमादिदेश । अथ प्रविश्य सा राजानं बभाषे । भो भुवनभूषण, तारारमण, कादम्बरीलोचनानन्दकर, सर्वस्त्वयास्य दुर्मतेरात्मनश्च वृत्तान्तः श्रुत एव । अहमपि दुरात्मनोऽस्य जननी श्रीः । तथाभूतमेनं दृष्ट्वास्य पित्राहमादिष्टा ' देवि यावदिदं कर्म परिसमाप्यते तावदेनं मर्त्यलोके बद्ध्वाधारय । यथा चास्यानुतापो भवति तथा विधीयताम् ' इति । तदस्य विनयायेदं विनिर्मितं

मया । सर्वमधुना तत्कर्म परिसमाप्तम् । शापावसाने च युवयो-स्सममेव सुखेन भवितव्यमिति मयायं त्वत्समीपमानीतः । अत्रापि च लोकसंपर्कपरिहाराय चाण्डालजातिः ख्यापिता । तदनुभवतां संप्रति द्वावपि दुःखबहुले तनू परित्यज्येष्टजनसमागमसुखम् । इत्यभिदधानैव क्षितेर्गगनमुदपतत् । शूद्रकोऽपि सपदि संस्मृतजन्मान्तरीयवृत्तान्तः वैशम्पायनेन सह सद्यः काष्ठीभूतं देहमहासीत् । अत्रान्तरे मधुमाससुलभेन मनसिजविकारेण पर्याकुलितहृदया कादम्बरी सायमेकान्ते चन्द्रापीडतनुं निर्भरं कण्ठे जग्राह । ततस्सद्य एव प्रत्यापन्नजीवितश्चन्द्रापीडः चक्षुरुन्मील्य सुप्तप्रतिबुद्ध इवोत्थाय कादम्बरीमवादीत् । 'भीरु, परित्यज्यतां भयम् । प्रत्युज्जीवितोऽस्मि तवैवामुना कण्ठग्रहेण । अद्यैव निवृत्तशापेन मया परित्यक्ता सा शूद्रकाख्या तनुः' इत्यभिदधत्येव चन्द्रावतारे चन्द्रापीडे पुण्डरीकोऽपि कपिञ्जलकरावलम्बी गगनादवततार ॥

दृष्ट्वा च तं प्रियसखीदयितं कादम्बरी स्वयमेव धावित्वा दत्तकण्ठग्रहा महाश्वेतायै प्रादर्शयत् । मृत्युंजयजपव्यग्रस्तारापीडोऽपि मदलेखानिवेदितवृत्तान्तः सह विलासवत्या सरभसमागत्य पादयोः पतितं चन्द्रापीडं गाढमालिलिङ्ग । तदानीमेव कपिञ्जलस्समुपसृत्य शुकनासमवादीत् । एवं सन्दिष्टमार्यस्य भगवता श्वेतकेतुना । 'अयं खलु पुण्डरीको मया संवर्धितः तवाप्यात्मजः । तद्वैशम्पायन एवायमित्यवगत्याविनयेभ्यो निवारणीयः । परोऽयमिति कृत्वा नोपेक्षणीयः इति । शुकनासोऽपि तमादेशं शिरसा प्रतिजग्राह । अथापरेद्युः प्रभाते केयूरकनिवेदितवृत्तान्तौ चित्ररथहंसौ सह मदिरागौरीभ्यां तत्रैवाजग्मतुः । परस्परं मिलितानां सविस्मयसंवादानां तेषां निरवधिको महोत्सवः प्रावर्तत ।

अथ ते हेमकूटं गत्वा यथाविधि दंपत्योरुभयोः विवाहक्रियां निरवर्तयन् । एकदा कादम्बरी चन्द्रापीडं रहस्यप्राक्षीत् । आर्यपुत्र सर्वे वयं मृताः पुनर्जीविताः संगताश्च । सा पुनर्वराकी पत्रलेखा कथंभूतेति । सोऽपि प्रत्यवादीत् । सा हि रोहिणी शतं मामुपश्रुत्य मत्परिचर्यायै मर्त्यलोकमवातारीत् । जन्मान्तरं गच्छता मया पुनरात्मलोकं विसर्जितेति । अथ चन्द्रापीडो हेमकूट एव कतिपयदिवसगणं नीत्वा कादम्बरीपुण्डरीकमहाश्वेताभिः सममुज्जयिनीमागत्य राज्येऽभिषिक्तः पुण्डरीकनिवेशितसमस्तराज्यभारः कादम्बरीलोचनानन्दकरः परां कोटिमानन्दस्याध्यगच्छत् ॥

चन्द्रापीडचरितं समाप्तम् ॥

---

॥ श्रीः ॥

# ॥ प्रेमानन्दभारती ॥

विदितमेव किल निखिललोकवृत्तान्तप्रकाशकपत्रिकादत्तावधानानां सहृदयापठितॄणाम्; यदिदानीं चेन्नपुर्यां वङ्गदेशीयाः प्रेमानन्दभारतीसमाख्याः केचन यतिवर्याः स्वाश्रमोचितं निवृत्तिमार्गमप्रहायैव निखिलसात्त्विकजनोपकाराय कतिपयदिनानि यावत् विद्वज्जनगरिष्ठेषु समाजेषु भक्तिप्रभृतीन् वेदान्तिसंमतान् विषयानधिकृत्य निरर्गलप्रसरया आङ्ग्लभाषानिबद्धया वाग्धोरण्या श्रुतिमधुरानुपन्यासान् वितन्वन्तीति । ते हि स्वकीया आ जन्मनः प्रवृत्तीः भगवति वासुदेवे चात्मनः परां भक्तिं दैनंदिनपत्रिकासु हिन्दूप्रभृतिषु यथा-

वसरमनभिज्ञप्रतिबोधनाय प्राचीकशन् । यासु विशदमुपलभामहे तेषां नवे वयसि वर्तमानानामेवान्यादृशमाङ्ग्लभाषाप्रावीण्यम् , पत्रिकाप्रकटनोत्साहम् , सति च धनागमे कुतोऽपि कारणान्नैस्पृह्यम् , तत्त्वान्वेषणाय गुरूपसदनम् , विरक्तिप्राचुर्येण तुरीयाश्रमाङ्गीकारम् , कृष्णैकमनस्कतया अनवरतं तल्लीलानुसंधानम् , क्रमशश्च मुनिजनैकलभ्यं भावनाप्रकर्षपरिणामभूतं भगवत्साक्षात्कारम् , एवंविधमन्यच्च विशुद्धमपदानम् ॥

अमी चामेरिकाख्ये विस्तीर्णे पाश्चात्यभूखण्डे केवलमष्टापदसंचयव्यग्रान् , तत्रत्यान् , अध्यात्मज्ञानविमुखान् जनान् इन्द्रियार्थानुसेवनैकप्रवणमानसान् अवेक्ष्य विदीर्णहृदयाः कृच्छ्रादेतेषां मनांसि विषयेभ्यो निवर्त्य महत्या करुणया आत्मानित्यतादि भारतीयं सार्वजनीनं तत्वजातमुपादिक्षन् । पश्चाच्च साभिलाषं सङ्घशः समापतत्सु श्रोतृजनेषु भगवद्गुणमाध्वीकधारामनवरतं ववृषुः ॥

तस्मिंश्च भुवो भागे कुत्रचित् प्रधाननगरे गोपिकानन्दनस्यालयं कंचन व्यरचयन् । अनन्तरं तद्देशीयाभिः कतिपयमहिलाभिः अध्यात्मोपदेशवशीकृताभिः अनुगताः द्वित्रसंवत्सरेभ्यः पूर्वमिमं भारतं वर्षं प्रत्याजग्मुः । तैः सह महानावमारुह्येमं देशमागच्छन्ती भक्तिपरवशा काचित् शिष्या इदानीं शोचनीयां दशामापन्नायाः भारतभूमेरभ्युदयपरम्परामाशंसमाना, आचार्यमनोऽनुसारि, शब्दसौष्ठवेनार्थपौष्कल्येन च निरुपमम् , अचिन्तितोपस्थितम् , सिद्धोपदेशवत् परमाह्लादनम् , गुणोत्तरं किमपि रत्नसप्तकमिव गाथासप्तकमाङ्ग्लभाषया ग्रथितं देवताविष्टेवावशमगासीत् । यदिदं पद्यसप्तकं

भारतीयगाथानाम्ना प्रथितं वर्तते । यस्य चानुवादः सकौतुकं साव-धानं चास्माभिर्गीर्वाण्या विरचितोऽत्र प्रकाश्यते ॥

एवं प्रथितप्रभावा यतयः सांप्रतं मयूरपुरीनामके मद्रपुरी-शाखानगरे, गुणग्राहिभिः, आस्तिकप्रियैः, अत्युदारस्वभावैः श्रीमद्भिः कृष्णस्वाम्यार्यवर्यैः स्वीये सदने सादरमाराधिताः विराजन्ते ॥

तैश्च सादरमनुमोदितं प्रियशिष्यामुखात् स्वयमेव निर्गलितं गाथासप्तकमिदम् अङ्ग्लवाण्यनभिज्ञानां सहृदयानामनुरञ्जनाय यथा-शक्ति देवभाषया छन्दोमय्या अनूद्यते—

## भारतीयगाथासप्तकम् ॥

---

जय जय पुराणवसुधे !
    भारति ! पुण्यप्रथे ! मम जनित्रि ! ।
शिक्षय मां निजविभवं
    सुकृतैः प्राप्याऽसि जीवितं च भुवः ॥ १ ॥

बुधजनपदाङ्कपूता
    मुनिभिः सिद्धैश्च गीतचरिता त्वम् ।
जय भारति ! तव महिमा
    प्राक्तन उज्जृम्भतेऽद्य महनीयः ॥ २ ॥

दिक्षु विदिक्षु च चरतः
    त्वमसि ममाम्ब ! प्रियं परं धाम ।
तव मरुतामनुभावः
    कर्षति मां त्वद्भुवां च माधुर्यम् ॥ ३ ॥

जागृत भारतजनुषः !
गायत चोच्चैर्यशांसि भारत्याः ।
ननु जाग्रति ते धर्माः
यैरेषा नूनमुच्छ्रयं भजते ॥ ४ ॥

अथ नः पावनमधुरं
शान्तिवचो भवतु सर्वदा शरणम् ।
शान्तिर्व्यपोह्य विघ्नान्
निर्वैरं दिवसमानयेद्विमलम् ॥ ५ ॥

औन्नत्यं जानपदं
दृष्टं पतयालु सुस्थिरा तु त्वम् ।
चिरमेवं भव नित्ये !
त्वामायान्त्वाशिषो दिव्याः ॥ ६ ॥

खिन्ना विपक्षमरुता
धीरा भाव्यं प्रतीक्षसे प्रशमम् ।
तव दायं जगदवनं
भव देव्यनिशं तमोऽपहा जगताम् ॥ ७ ॥

इति भारतीयगाथा-
सप्तकमनुवाच्य भाषया दैव्या ।
अर्पयति निर्भरोऽयं
कविरच्युतपादयोः स्वकृतिं ॥ ८ ॥

इति सहृदयसमुदायदासः

चैत्रपुरी }
माघमासः }

**राजगोपालाचार्यः,**
राजकीय न्यायविद्याशालाध्यापकः ।

# श्रीकृष्णलीलायितम् ॥

भ्रातः! कन्या ह्येषा प्रसूता। किमनया कस्यापि वैशसं भविष्यति? एकमपि स्त्र्यपत्यमवशिष्यतां मे। जन्मनैव हता परवती किमिति भूयो घानिष्यते स्त्रीप्रसूतिः।' इत्यादि सोपग्रहमसकृदायाचमानामपि स्वसारं स्वामविगणय्य तामपि दारिकां पूर्ववत् पादयोरादाय तस्यामेव वध्याशिलायामधोमुखं व्यपोढयत् ॥

अथ सा तस्य हस्तग्रहपरिच्युता तत्क्षणमनासाद्य तां शिलामुत्पतिता गगनतले भुजाष्टकोद्यतशङ्खचक्रगदाशूलशरशरासनखड्गखेटकप्रभापटलपुनरुक्तव्योमनीलिमरूपम्, अकालोद्गतबालार्कशतविभ्रमकरमहामणिगणप्रत्युप्तप्रत्यग्रकनककिरीटकुण्डलप्रभापरिवेषपरिक्षिप्तवदनचन्द्रमण्डलम्, चन्द्रांशुसूत्रग्रथिततारकश्रेणीसंकाशतारहारप्रभानुलिप्तपयोधरोत्सेधम्, वलयाङ्गदाङ्गुलीयकमणिकिरणकिसलयितबाहुलतम्, अनेकवर्णरत्नचित्रितमेखलादामनियमितपीताम्बरपरिधानालंकृतनितम्बबिम्बम्, नीलकौशेयकृतोत्तरासङ्गम्, विक्षिप्तक्षणप्रभाप्रसरस्येन्द्रायुधचुम्बिनो नवाम्बुदस्यानुकुर्वाणम्, लीलालोलनूपुरमरालाध्यासितचरणकमलम्, दिव्यरूपमनुदर्शयन्ती, परितः सेवाव्यग्रनिभृतकरणग्रामया अभिष्टूयमाना सुरपरिषदा कंसमाभाष्योवाच—'अरे! दुरात्मन्! दैवहत! पापाचार! यमनुचिन्त्य मामेवं संत्रासमुषितदृष्टिर्हन्तुमारब्धोऽसि स ते शत्रुः प्राणहरो गुहागत इव केसरी क्वचिदलक्षितो भवादृशां वितथदृशां स्वैरं विवर्धते। तेन चावस्कन्द्य गृहीतस्य मुमूर्षतो वृथा विस्तृतं वक्षःकपाटं ते विपाट्य नखशिखरैः प्रत्यग्रकदुष्णस्रवदसृगासवापानगोष्ठीरसं न हास्यामि—' इति ॥

तथाचानुशिष्यान्तर्हितायां सह त्रिदशपरिषदा योगमायायां दैवविसंवादितेन निजेन पुरुषाकारेणानुशयानो नितान्तक्रीडाभरविध्वस्ततेजाः कृतापराधः स्वसुः पादपतितः प्रसादयन् निसर्गसरलहृदयया देवकनन्दन्या— 'भ्रातः! माव्यथिष्ठाः । कस्तवापराधः? दैवं हि परोक्षचरितं स्वैर्दोषैः दूषितं दर्शयति पुरुषम् । यदुत तथा नाम मयि वत्सलो दृष्टपूर्व इदानीमप्येवं प्रवणस्त्वमेव मे दारकानाविष्ट इव दुष्टग्रहेणाहिंसीः । तत्कथमन्तरेण दैवदुर्ललितं संभाव्यते । मृत्युना प्रथमाघ्रातं पश्चादेव हि जिघ्रन्ति व्याधिशस्त्रप्रभृतीनि । मुधापवादाय यः क्रियाविषयमुपहरति कर्तारं च प्रहिणोति । तं हि परोक्षवृत्तिं विधातारमनवधारयन् लोकोऽयमन्यथा चान्यथा च विभ्राम्यति'—— इत्येवमादिक्षमासारं विवेकाविमलं सौभ्रात्रपेशलं च समाश्वासितः तथैव वसुदेवेनाप्यनुदर्शितोऽप्यात्मदोषदूषिताशय एव न किंचित् प्रतिब्रुवन् ध्यानावनतशिरा विवेश निवेशनम् ॥

गोकुले च निस्तीर्णधूमनिद्रा यशोदा तमात्मीयमेव पुत्रं मन्यमाना निर्भरतनयवात्सल्यपरवशा महोत्सवमनुबभूव । प्रथमप्रसूता च रोहिणी समग्रेन्दुमण्डलविमलकान्तिना संकर्षणेनात्मजेन महतीं प्रीतिं जग्राह । नन्दोऽपि शारदप्रावृषेण्यपयोवाहाभ्यामिव सहदर्शितोदयाभ्यां कुमाराभ्यां सर्वश्रेयसामुपरिस्थितमज्ञासीदात्मानम् ॥

कंसस्तु तेन योगनिद्रावागङ्कुशेन गाढविद्धो मर्मणि द्विरद इव जातमस्तकव्यथस्तमनिद्र एव अतिवाह्य क्षपाशेषं प्रत्यूषे सह सचिवैरात्मनीनैः समेत्य सर्वशो जानपदग्रामव्रजाकरेष्वनिर्दशानां निर्दशानां वा शिशूनां व्यापादनमेव पूर्वकृत्यं संमन्त्र्य मायाविदः शूरान् कामरूपानादिदेश निशाचरान्— 'सर्वैरिहास्मत्सुहृद्भिः इद-

मेकं चेतश्शल्यमुद्धर्तुं धूतादरैरनेकधा तत्र तत्र प्रवर्तितव्यम् । स हि गूढाचारो मायाशीलो विष्णुरन्यथा चान्यथा च निदर्शयन् स्वैरमन्यथैव स्वार्थं समर्थयते। न च तस्येदमित्थंभावयोः किंचिदस्त्यवगमसाधनम् । सर्वसंहारे तु प्रवृत्ते सोऽप्यन्तः पतन्नमुच्यते इदमेव च तत् यदाहुः 'दैवं पुरुषकारेण प्रतिहन्यते' इति । तदेष भवतां स्वामिप्रणयितायाः पुरुषमानितायाश्च प्रदर्शनकालः । सर्वथाचास्मच्छ्रेयसि रतानामयमेक एव क्रियापरिशेष इति । आत्मनैव च हिंसाव्यसनिनः प्रभोरपि निदेशेन प्रगुणीकृतपापाभिसन्धयस्ते पूतनाकेशिधेनुकशकटप्रमुखा अहंप्रथमिकया स्वाम्यर्थं सिषाधयिषन्तः प्रतस्थिरे ॥

अथ तत्र पूतना निशाचरी कामरूपिणी कमनीयेन धात्रीवपुषा ग्रामखर्वटनगराणि विचरन्ती कदाचिद्व्रजमासाद्य नन्दमन्दिरमवगाह्य प्रसुप्तजने निशीथे सोपग्रहमुपलालयन्तीव यशोदा नन्दनमङ्केनादाय विषदिग्धं स्तनमपाययत् । तस्मिंस्तु विषधरराजपर्यङ्कनिश्शङ्कयोगनिद्रारसप्रसङ्गोपपादितजगत्सर्गस्थितिप्रतिसर्गव्यापारे कथं क्रमते विषस्य तेजः ? । गृहीतमात्रे तु तेन पयोधरे परासुः पपात पूतना । चित्रं नन्दनन्दनेन निपीतं विषम्, पूतना तु प्राणैर्वियुयुजे इति ॥

अथवा कल्पावसानेषु यस्य संकर्षणात्मनो निश्वासक्ष्वेलावलीढमशेषं त्रिभुवनं भस्मसाद्भवति किं तस्य बाह्या विषपरमाणवः करिष्यन्ति ? ॥

तदनु शिशुक्रन्दितश्रवणव्यपोढनिद्रा यशोदादयो गोपिका नन्दादयश्च गोपास्तथाविधामुत्तानपतितां गण्डशैलकरालाकारामालोक्य राक्षसीमर्भकं च क्रीडन्तं किमिदमिति संभ्रमभ्रान्तदृष्टयः क्षणं

तूष्णीमतिष्ठन् । नन्दस्तु कुशलमतिश्चिरेण कंसधात्रीं तामभिज्ञानै-रभिजानन्नुपस्थितं कंसभयमवधार्य नित्यशङ्कितः कुमारपरिरक्षणे दत्तावधानो बभूव ॥

अन्यदा च यशोदा घोषसमुदाचारेण सुखप्रसुप्तमर्भकमन्यतम-स्य शकटस्याधस्तादाधाय यमुनां सिष्णासिषुरयासीत् । प्रत्यायाता च भग्नाक्षमुद्भुग्णघटमुत्क्षिप्तैकचक्रमपाविद्धं शकटं निजमार्गदत्तोद्बाष्प-लोचनं वक्त्राभ्यन्तरनिवेशिताङ्गुष्ठं च तनयमालक्षयन्ती हाहेत्यावेग-व्यग्राक्षरं विक्रोशन्ती सरभसं सुतमाददे । श्रुत्वा च रभसोपयातः पश्यन् नन्दः कथमिदं नः परावृत्तम्? केनेदं चेष्टितमिति तत्र स्थितान् गोपकुमारकान् पप्रच्छ । अस्यैव बालकस्य विधूतपाणिपादं रुदतः पादाग्रस्पर्शव्याविद्धं विध्वस्तमेतदिति निवेदितार्थः तैर्भय-विस्मयचित्रीकृतचित्तवृत्तिः कुमाररक्षाव्यसनितया जपहोमादीनि मङ्गलान्युपपादयामास ॥

अथान्यदा रूक्षैः शर्करापरिक्षेपैः प्रतोदैरिव प्रतुदन्नङ्गानि नी-रन्ध्ररजोवर्षमुषितदृष्टिः विजृम्भमाणसन्तमसविलुप्तदिग्विवेकः प्रववौ महावातः । तत्रान्तरे यशोदा निजोत्सङ्गविधूतमकस्माद्दुर्भरमिव सं-जातमर्भकमवनिपृष्ठे कथंचिदवरोप्यात्याहितं शङ्कमाना मङ्गलानुध्या-नाय क्षणमीलिताक्षी चक्षुरुन्मील्य पश्यन्ती न ददर्श क्वचिदपि तन-यम् । महति निमग्ना शोकार्णवे स्वमात्मानमप्यचेतयमाना मोहाव-रुद्धसर्वेन्द्रियवृत्तिः अन्तरिक्षाच्छिलातले परिभ्रष्टमवपातवेगशिथिलि तावयवग्रन्थिमतिभीषणमासुरं रूपं, तस्य च कण्ठलग्नं स्वमात्मजम्

( क्रमशः )

॥ श्रीः ॥

# श्रीमद्ग्रन्थत्रयभाष्योपात्तप्रमाणग्रन्थानां नामानि तत्तत्संकेताक्षराणि च ॥

| संकेताक्षराणि | ग्रन्थनामानि | संकेताक्षराणि | ग्रन्थनामानि |
|---|---|---|---|
| अष्ट | अष्टश्लोकी | धातु | धातुपाठः |
| अष्टा | अष्टाध्यायी | नाम | नामलिङ्गानुशासनम् |
| अहि | अहिर्बुध्न्यसंहिता | नित्य | नित्यग्रन्थः |
| आप | आपस्तम्बधर्मसूत्रम् | निरु | निरुक्तम् |
| इ-स | इतिहाससमुचयः | नी-सू | नीलासूक्तम् |
| ईश्व | ईश्वरसंहिता | न्याय | न्यायतत्वम् |
| क-व | कठवल्ली | पर | परमसंहिता |
| काश्य | काश्यपसंहिता | पाञ्च | पाञ्चरात्रम् |
| कौषी | कौषीतकोपनिषत् | पौष्क | पौष्करसंहिता |
| ग-श्रु-प्र | गद्यश्रुतप्रकाशिका | बृह | बृहदारण्यकम् |
| गी-भा | गीताभाष्यम् | ब्रा-पु | ब्राह्मपुराणम् |
| गी-सं | गीतार्थसंग्रहः | ब्रह्म | ब्रह्मकैवर्तम् |
| चतु | चतुःश्लोकी | भ-गी | भगवद्गीता |
| छा | छान्दोग्यम् | भरत | भरतलक्षणवाक्यम् |
| जितं | जितंतेस्तोत्रम् | भ-स्मृ | भरद्वाजस्मृतिः |
| तल | तलवकारोपनिषत् | भाग | श्रीभागवतम् |
| तै | तैत्तरीयम् | मनु | मनुस्मृतिः |

* बहुत्र प्राचुर्यानुरोधेन कुम्भघोणमुद्रिते श्रीमद्रामायण श्रीमन्महाभारतपुस्तके, बम्बायिनगरमुद्रितं श्रीविष्णुपुराणपुस्तकं चानुसृत्यात्र आकरो निर्दिश्यते ॥

| संकेताक्षराणि | ग्रन्थनामानि | संकेताक्षराणि | ग्रन्थनामानि |
|---|---|---|---|
| मन्त्र | मन्त्रविशेषः | शैव | शैवपुराणम् |
| महा | महाभारतम् | शौन | शौनकसंहिता |
| महो | महोपनिषत् | श्रीगुण | श्रीगुणरत्नकोशः |
| मुक्त | मुक्तकवाक्यम् | श्रीभा | श्रीभाष्यम् |
| मुण्ड | मुण्डकोपनिषत् | श्रीरं | श्रीरङ्गराजस्तवः |
| मैत्रा | मैत्रायणीयोपनिषत् | श्रीवैकु | श्रीवैकुण्ठस्तवः |
| यास्क | यास्कनिरुक्तम् | श्रीसू | श्रीसूक्तम् |
| रह | रहस्याम्नायब्राह्मणम् | श्रीस्त | श्रीस्तवः |
| रा | रामायणम् | श्वेता | श्वेताश्वतरोपनिषत् |
| ल-तं | लक्ष्मीतन्त्रसंहिता | षड | षडर्थसंक्षेपः |
| वरद | वरदराजस्तवः | सन | सनत्कुमारसंहिता |
| व-पु | वराहपुराणम् | संवि | संवित्सिद्धिः |
| वा-पु | वामनपुराणम् | सात्व | सात्वतसंहिता |
| वि-त | विष्णुतत्वसंहिता | सुबा | सुबालोपनिषत् |
| वि-ध | विष्णुधर्मः | स्तोत्र | स्तोत्ररत्नम् |
| वि-पु | विष्णुपुराणम् | स्वायं | स्वायंभुववचनम् |
| वे-सं | वेदार्थसंग्रहः | हनु | हनुमन्नाटकम् |
| शारी | शारीरकसूत्रम् | | |



॥ श्रीः ॥

# प्रकरणसंकेताक्षराणि ॥

| संकेताक्षराणि | ग्रन्थनामानि | संकेताक्षराणि | ग्रन्थनामानि |
|---|---|---|---|
| अयो | अयोध्याकाण्डः | कि | किष्किन्धाकाण्डः |
| अरु | अरुणशाखा | बा | बालकाण्डः |
| आदि | आदिपर्व | ब्रा | ब्राह्मणम् |
| आन | आनन्दवल्ली | भी | भीष्मपर्व |
| आनु | आनुशासनिकपर्व | भृ | भृगुवल्ली |
| आर | आरण्यकाण्डः | मोक्ष | मोक्षधर्मः |
| आश्व | आश्वमेधिकपर्व | यु | युद्धकाण्डः |
| उ-श | उत्तरशतकम् | ल-स | लक्ष्मीसहस्रनाम |
| उत्त | उत्तरकाण्डः | वन | वनपर्व |
| उद्यो | उद्योगपर्व | शा | शान्तिपर्व |
| उप | उपनिषत् | शी | शीक्षावल्ली |
| कर्ण | कर्णपर्व | सह | सहस्रनामाध्यायः |
| क-शा | कठशाखा | सु | सुन्दरकाण्डः |



॥ श्रीः ॥

# श्रीमद्व्यलयभाष्योपात्तानां प्रमाणानाम् आकरप्रदर्शिका ॥

---

# देशवृत्तान्ताः

माघमासेऽस्मिन् श्रीमच्छंकरभगवत्पादाचार्यावतारक्षेत्रे कालडिनामके जनपदे श्रीशृङ्गगिरिपीठमलंकुर्वाणाः जगद्गुरुव्यपदेशेन विराजमानाः श्रीमत्सच्चिदानन्दशिवाभिनवनरसिंहभारतीस्वामिनः आदिशंकरभगवत्पादाचार्यार्चां सह शारदया सुमहता वैभवेन प्रत्यष्ठापयन् । बहवः पण्डिताः नानाशास्त्रविचक्षणाः समुमिलन् । पञ्चाङ्गनिर्णयसभापि काचन प्रावर्तत । क्षेत्रे महनीयेऽस्मिन् काचन महती वेदशास्त्रपाठशालापि सुप्रतिष्ठिता भविष्यति— इति जानन्तो वयं नितरां तुष्यामः ॥

# पुस्तकसमालोचना ॥

श्रीमद्वेदान्तदेशिकचरितम्— सुगृहीतनाम्ना श्रीमता ति. वेङ्कटरामव्यङ्गार्यमहाशयेन विरचितमिदं तेनैव प्रहितं सादरमङ्ग्यकारि । रचनाशैली सरला मनो हरति । द्रामिडभाषामयमिदं सर्वेषामेव द्रमिडदेशीयानां सुमहदुपकरोति । गद्यप्रबन्धलेखनशिक्षणेऽनितरसाधारणमस्य कार्यकरत्वं प्रशंसामः । कथानायकस्य सर्वभाषाप्रागल्भ्यं तदीयैर्निबन्धैः सुस्पष्टमेव । तदिह प्रशंसनीयया सरण्या प्राकाशि । ग्रन्थकर्ताऽयं सुमहता परिश्रमेण प्राचीनानि चरितनिबन्धनान्यधिगत्य परंपरागतांश्च विषयानाकलय्य मधुकरन्यायेनात्र समावेशयतीति मधुररससमास्वादमिदं मदयति मानसं सुहृदामिति पश्यामः ॥

एवमेषोऽन्यान्यपि तानि तानि निबन्धनानि प्राचीनान्यावश्यकानि संगृह्य परिशोधयति । यथासमयं च प्रकाशयिष्यतीति विश्वसिमः । श्रीमतोऽस्य भाषानैपुण्यं पुस्तकवाचनमात्रेणैवावगम्येतेति नात्र तदुपपादनाय प्रयतामहे । बहवोऽस्य नैपुणीं दक्षतां च विदन्ति । अतो नाधिकं लिखितुमिच्छामः । ग्रन्थस्यास्य मूल्यं प्रेषणव्ययं विना अष्टौ कलाः । ग्रन्थोऽयं सहृदयाकार्यदर्शिमुखाल्लभ्येत ॥

श्रीशैलताताचार्यः ।

